# चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः

## कारकम् ।

स्कन्द उवाच ।

कारकं सम्प्रवक्ष्यामि विभक्त्यर्थसमन्वितम् ।
ग्रामोऽस्ति हे महार्केह नौमि विष्णुं श्रिया सह ॥ १ ॥

स्वतन्त्रः कर्त्ता विद्यान्तं कृतिनः समुपासते । हेतुकर्त्तालम्भयते हितं वै कर्मकर्त्तरि ॥

स्वयं भिद्येत प्राकृतधीः स्वयञ्च छिद्यते तरुः ।
कर्त्ताऽभिहितं उत्तमः कर्त्ताऽनभिहितोऽधमः ॥ ३ ॥
कर्त्ताऽनभिहितो धर्मः शिष्ये व्याख्यायते यथा ।
कर्त्ता पञ्चविधः प्रोक्तः कर्म सप्तविधं शृणु ॥ ४ ॥

ईप्सितं कर्म च यथा श्रद्दधाति हरिं यतिः । अनीप्सितं कर्म यथा अहिं लङ्घयते भृशम् नैवेप्सितं नानीप्सितं दुग्धं सम्भक्षयन् रजः । भक्षयेदप्यकथितं गोपालो दोग्धि गां पयः कर्तृकर्माऽथ गमयेच्छिष्यं ग्रामं गुरुर्यथा । कर्म चाभिहितं पूजा क्रियते वै श्रिये हरेः कर्मानभिहितं स्तोत्रं हरेः कुर्य्यात् तु सर्वदम् । करणं द्विविधं प्रोक्तं बाह्यमभ्यन्तरं तथा

चक्षुषा रूपं गृह्णाति बाह्यं दात्रेण तल्लुनेत् ।
सम्प्रदानं त्रिधा प्रोक्तं प्रेरकं ब्राह्मणाय गाम् ॥ ६ ॥

नरो ददाति नृपतये दासं तदनुमन्तृकम् । अनिराकर्तृकं भर्त्रे दद्यात् पुष्पाणि सज्जनः अपादानं द्विधा प्रोक्तं चलमश्वात् तु धावतः । पतितश्चाचलं ग्रामादागच्छति स वैष्णवः चतुर्धा चाधिकरणं व्यापकं दध्नि वै घृतम् । तिलेषु तैलं देवार्थमौपश्लेषिकमुच्यते ॥

गृहे तिष्ठेत् कपिर्वृक्षे स्मृतं वैषयिकं यथा ।
जले मत्स्यो वने सिंहः स्मृतं सामीप्यकं यथा ॥ १३ ॥
गङ्गायां घोषो वसति औपचारिकमीदृशम् ।

तृतीया वाऽथ वा षष्ठी स्मृताऽनभिहिते तथा ॥ १४ ॥

विष्णुः सम्पूज्यते लोकैर्गन्तव्यं तेन तस्य वा । प्रथमाऽभिहितकर्तृकर्मणोः प्रणमेद्धरिम्

हेतौ तृतीया चान्येन वसेद् वृक्षाय वै जलम् ।

चतुर्थी तादर्थ्येऽभिहिता पञ्चमी पर्युपाङ्मुखैः ॥ १६ ॥

योगे वृष्टः परि ग्रामाद् देवोऽयं बलवत् पुरा । पूर्वो ग्रामादृते विष्णोर्न मुक्तिरितरोहरेः

पृथग् विनाद्यैस्तृतीया पञ्चमी च तथा भवेत् ।

पृथग् ग्रामाद् विहारेण विना श्रीश्च श्रिया श्रियः ॥ १८ ॥

कर्मप्रवचनीयाख्यैर्द्वितीया योगतो भवेत् । अन्वर्जुनञ्च योद्धारो ह्यभितो ग्राममीरितम्

नमःस्वाहास्वधास्वस्तिवषड़ाद्यैश्चतुर्थ्यपि ।

नमो देवाय ते स्वस्ति तुमर्थाद् भाववाचिनः ॥ २० ॥

पाकाय पक्तये याति तृतीया सहयोगके । हेत्वर्थे कुत्सितेऽङ्गे सा तृतीया च विशेषणे

पिताऽगात् सह पुत्रेण काणोऽक्ष्णा गदया हरिः ।

अर्थेन निवसेद् भृत्यः काले भावे च सप्तमी ॥ २२ ॥

विष्णौ नते भवेन् मुक्तिर्वसन्ते स गतो हरिम् ।

नृणां स्वामी नृषु स्वामी नृणामीशः सतां पतिः ॥ २३ ॥

नृणां साक्षी नृषु साक्षी गोषु नाथो गवां पतिः ।

गोषु सूतो गवां सूतो राज्ञां दायादकोऽस्त्विह ॥ २४ ॥

अन्नस्य हेतोर्वसति षष्ठी स्मृत्यर्थकर्मणि ।

मातुः स्मरति गोप्तारं नित्यं स्यात् कर्तृकर्मणोः ।

अपां भेत्ता तव कृतिर्न निष्ठादिषु षष्ठ्यपि ॥ २५ ॥

इत्यादिमहापुराणे आग्नेये कारककथनंनामचतुःपञ्चाशदधिकत्रिशततमोऽध्यायः ।

# पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः

## समासः ।

स्कन्द उवाच ।

षोढा समासं वक्ष्यामि अष्टाविंशतिधापुनः । नित्यानित्यविभागेन लुगलोपेन च द्विधा

कुम्भकारश्च नित्यः स्याद्धेमकारादिकस्तथा ।
राज्ञः पुमान् राजपुमान् नित्योऽयञ्च समासकः ॥ २ ॥
कष्टश्रितो लुक्समासः कण्ठेकालादिकस्त्वलुक् ।
स्यादष्टधा तत्पुरुषः प्रथमाद्यसुपा सह ॥ ३ ॥

प्रथमा तत्पुरुषोऽयं पूर्वं कायस्य विग्रहे । पूर्वकायोऽपरकायो ह्यधरोत्तरकायकः ॥४॥

अर्द्धं कणाया अर्द्धकणा भिक्षातूर्य्यमथेदृशम् ।
आपन्नजीविकस्तद्वत् द्वितीया चाथराश्रितः ॥ ५ ॥
वर्षम्भोग्यो वर्षभोग्यो धान्यार्थश्च तृतीयया ।
चतुर्थी स्याद् विष्णुबलिर्वृकभीतिश्च पञ्चमी ॥ ६ ॥
राज्ञः पुमान् राजपुमान् षष्ठी वृक्षफलं तथा ।
सप्तमी चाक्षशौण्डोऽय महितो नञ्समासकः ॥ ७ ॥

कर्मधारयः सप्तधा नीलोत्पलमुखाः स्मृताः । विशेषणपूर्वपदो विशेष्योत्तरतस्तथा ॥
वैयाकरणखसूचिः शीतोष्णं द्विपदं शुभम् । उपमानपूर्वपदः शङ्खपाण्डर इत्यपि ॥ ९ ॥
उपमानोत्तरपदः पुरुषव्याघ्र इत्यपि । सम्भावनापूर्वपदो गुणवृद्धिरितीदृशम् ॥ १० ॥
गुण इति वृद्धिर्वाच्या सुहृदेव सुबन्धुकः । अवधारणपूर्वपदो बहुव्रीहिश्च सप्तधा ॥
द्विपदश्च बहुव्रीहिरारूढभवनो नरः । अर्चिताशेषपूर्वोऽयं बहुङ्घ्रिः परिकीर्त्तितः ॥१२॥

एते विप्राश्चोपदशाः सङ्ख्योत्तरपदस्त्वयम् ।
सङ्ख्योभयपदो यद्वद् द्वित्रा द्व्येकत्रयो नरः ॥ १३ ॥

सहपूर्वपदोऽयं स्यात् समूलोद्धृतकल्पतरुः । व्यतिहारलक्षणार्थः केशाकेशि नखानखि
दिग्लक्ष्यां स्याद् दक्षिणपूर्वा द्विगुराभाषितो द्विधा ।
एकवद्भावि द्विश्रृङ्गं पञ्चमूली त्वनेकधा ॥ १५ ॥
द्वन्द्वः समासो द्विविधो हीतरेतरयोगकः । रुद्रविष्णू समाहारो भेरीपटहमीदृशम् ॥
द्विधाख्यातोऽव्ययीभावो नामपूर्वपदो यथा ।
शाकस्य मात्रा शाकप्रति यथाऽव्ययपूर्वकः ॥ १७ ॥
उपकुम्भञ्चोपरथ्यं प्राधान्येन चतुर्विधः । उत्तरपदार्थमुख्यो द्वन्द्वश्चोभयमुख्यकः ॥
पूर्वार्थेशोऽव्ययीभावो बहुव्रीहिश्च बाह्यशः ॥ १८ ॥
इत्यादिमहापुराणेआग्नेयेसमासकथनंनामपञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

# षट्पञ्चाशदधिकत्रिशततमोऽध्यायः

## तद्धितम् ।

स्कन्द उवाच ।

तद्धितं त्रिविधं वक्ष्ये सामान्यवृत्तिरीदृशी ।
ले व्यंसलो वत्सलः स्यादिलचि स्यात् तु फेनिलम् ॥ १ ॥
लोमशः शे पामनी ने इलचि स्यात् तु पिच्छिलम् ।
अणिप्राज्ञ आर्चकः स्यात् दन्तादुरचि दन्तुरः ॥ २ ॥
रै स्यान्मधुरं सुशिरं रै स्यात् केशर ईदृशः । हिरण्यं ये मालवो वे वलचिस्याद्रजस्वलः
इनौ धनी करी हस्ती धनिकं टिकनीरितम् ।
पयस्वी विनि मायावी ऊर्णायुर्युचि ईरितम् ॥ ४ ॥
वाग्मी मिनि आलचि स्याद् वाचाकश्चाटचीरितम् ।
फलिनो बर्हिणः केकी वृन्दारकस्तथा कनि ॥ ५ ॥

आलुचि शीतन्न सहते शीतालुः श्वालुरीदृशः ।
हिमालुरालुचि स्याच्च हिमं न सहते तथा ॥ ६ ॥
रूपं वातादुलचि स्याद् वातुलश्चानपत्यके ।
वाशिष्ठः कौरवो वासः पाञ्चालः सोऽस्य वासकः ॥ ७ ॥
तत्र वासो माथुरः स्याद् वेत्यधीते च चान्द्रकः ।
व्युत्क्रमं वेत्ति क्रमकःनरश्चकाम कौशकः ॥ ८ ॥
प्रियङ्गूणां भवं क्षेत्रं प्रैयङ्गवीनकं खञि । मौद्गीनं कौद्रवीणञ्च वैदेहश्चानपत्यके ॥
इञि दाक्षिर्दाशरथिः कञि नारायणादिकम् ।
आश्वायनः स्याच्च फञि यञि गार्ग्यश्चवात्सकः ॥ १० ॥
ढकि स्याद् वैनतेयादिश्चाटकेरस्तथैरकि । ढकि गोध्रेरको रूपं गौधारश्चारकीरितम्
क्षत्रियो घे कुलीनः खे ण्ये कौरव्यादयः स्मृताः ।
यति मूर्द्धन्यमुख्यादिः सुगन्धिरिति रूपकम् ॥ १२ ॥
तारकादिभ्य इतचि नभस्तारकितादयः । अनङि स्याच्च कुण्डोघ्नी पुष्पधन्वसुधन्वनौ
चञ्चुपि वित्तचञ्चुः स्याद् वित्तमस्य च शब्दके ।
चणपि स्यात् केशचणः रूपे स्यात् पटरूपकम् ॥ १४ ॥
इयसौ च पटीयान् स्यात् तरप्यक्षतरादिकम् ।
पचतितराञ्च तरपि तमप्यटतितमामपि ॥ १५ ॥
मृद्वीतमा कल्पपि स्यादिन्द्रकल्पोऽर्ककल्पकः । राजदेशीयो देशीये देश्ये देश्यादिरूपकम्
पटुजातीयो जातीये जानुमात्रञ्च मात्रचि । ऊरुद्वयसो द्वयसचि ऊरुदघ्नञ्च दघ्नचि ॥
तयटि स्यात् पञ्चतयः दौवारिकष्ठकीरितम् । सामान्यवृत्तिरुक्ताऽथ अव्ययाख्यश्चतद्धितः
यस्माद् यतस्तसिलि च यत्र तत्र त्रलीरितम् ।
अस्मिन् काले ह्यधुना स्यादिदानीञ्चैव दान्यपि ॥ १६ ॥
सर्वस्मिन् सर्वदा दास्यात् तस्मिन् काले हिलीरितम् ।
तर्हि होऽस्मिन् काल इह कर्हि कस्मिंश्च कालके ॥ २० ॥

यथा थालि थमि कथं पूर्वस्यां दिशि सञ्चयेत् ।
अस्तात्ति चैव पूर्वस्याः पूर्वादिग्रामणीयकाः ॥ २१ ॥
पुरस्तात् सञ्चरेद् गच्छेत् सद्यस्तुल्येऽह्नीरितम् ।
उति पूर्वाब्दे च परुत् पूर्वतरे परार्य्यपि ॥ २२ ॥
ऐषमोऽस्मिन् संवत्सरे रूपं समसि चेरितम् ।
एद्यवौ परेद्यवि स्यात् परस्मिन्नहनीरितम् ॥ २३ ॥
अद्यास्मिन्नहनि द्ये स्यात् पूर्वेद्युश्च तथैद्युसि ।
दक्षिणस्यां दिशि वसेत् दक्षिणाद् दक्षिणाद्युभौ ॥ २४ ॥
उत्तरस्यां दिशि वसेदुत्तरादुत्तराद्युभौ । उपरि वसेदुपरिष्टाद् भवेद्रिष्टाति ऊर्ध्वकात्
उत्तरेण च पित्रोक्तम् आचि च स्याच्च दक्षिणा ।
आहौ दक्षिणाहि वसेद् द्विप्रकारं द्विधा च धा ॥ २६ ॥
ध्यमुञि चैकध्यं कुरु त्वं द्वैधन्धमुञि चेदृशम् ।
द्वौ प्रकारौ द्विधा धाचि आसुसुरतरं यथा ॥ २७ ॥
निपातास्तद्धिताः प्रोक्ताः तद्धितो भाववाचकः ।
पटोर्भावः पटुत्वन्त्वपटुता तलिचेरितम् ॥ २८ ॥
प्रथिमा चेमनि पृथोः सौख्यं सुखात् ष्यञीरितम् ।
स्तेयं याति च स्तेनस्य ये सख्युः सख्यमीरितम् ॥ २९ ॥
कपेर्भावश्च कापेयं सैन्यं पथ्यं यकीरितम् ।
आश्वं कौमारकं चाणि रूपं चाणि च यौवनम् ।
आचार्य्यकं कणि प्रोक्तमेवमन्येऽपि तद्धिताः ॥ ३० ॥

इत्यादिमहापुराणे आग्नेये तद्धितकथनं नाम षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ।

# सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः

## उणादिसिद्धरूपम् ।

**कुमार उवाच ।**

उणादयोऽभिधास्यन्ते प्रत्यया धातुतः परे ।
उणि कारुश्च शिल्पी स्यात् जायुर्मायुश्च पित्तकम् ॥ १ ॥
गोमायुर्वायुर्वेदेषु बहुलं स्युरुणादयः । आयुः स्वादुश्च हेत्वाद्याः किशारुर्धान्यशूककः
कृकवाकुः कुक्कुटः स्याद् गुरुर्भर्त्ता मरुस्तथा । शयुश्चाजगरो ज्ञेयः स हरायुधमुच्यते
स्वरुर्वज्रं त्रपुरुसिसमसारं फल्गुरीरितम् । गृध्रश्च क्रनि किरचि मन्दिरं तिमिरं तमः
इलचि सलिलं वारि कल्याणं भण्डिलं स्मृतम् ।
बुधो विद्वान् कसौ स्याच्च शिविरं गुप्तसंस्थितिः ॥ ५ ॥
ओतुर्विड़ालश्चतुनि अभिधानादुणादयः । कर्णः कामी च गृह भूर्वास्तुजो वातृकः स्मृतः
अनड्वान् वहतेर्विनि स्याज्जातौ जीवार्णवौषधम् ।
नौ वह्निरिननि हरिणः मृगः कामी च भाजनम् ॥ ७ ॥
कम्बोजो भाजनम्भाण्ड सरण्डश्च चतुष्पदः । तरुरेरण्डः सङ्घातो वरूड़ः साम निर्भरम्
स्फारं प्रभूतं स्यान्नन्तप्रत्यये चीरवल्कलम् । कातरो भीरुरुग्रस्तु प्रचण्डो जवसं तृणम्
जगच्चैव तु भूर्लोको कृशानुर्ज्योतिरर्ककः । वर्वरः कुटिलो धूर्त्तश्चत्वरञ्च चतुष्पथम्
चीवरं भिक्षुप्रावृत्तिरादित्यो मित्र ईरितः । पुत्रः सूनुः पिता तातः पृदाकुर्व्याघ्रवृश्चिके
गर्त्तोऽवटोऽथ भरतो नटोऽपरेऽप्युणादयः ॥ ११ ॥

इत्यादिमहापुराणे आग्नेयेउणादिसिद्धरूपकथनंनामसप्तपञ्चाशदधिकत्रिशततमोऽध्यायः

———

# अष्टपञ्चाशदधिकत्रिशततमोऽध्यायः

## तिङ्विभक्तिसिद्धरूपम् ।

कुमार उवाच ।

तिङ्विभक्तिं प्रवक्ष्यामि तथाऽऽदेशं समासतः ।
तिङस्त्रिष्वपि वर्त्तन्ते भावे कर्मणि कर्त्तरि ॥ १ ॥
सकर्मकर्मकाच्च कर्त्तरि द्विपदे स्मृताः । सकर्मकाकर्मणि च तदादेशस्तथेरितः ॥२॥
वर्त्तमाने लड़ाख्यातो विध्याद्यर्थे लिङीरितः ।
विध्यादौ लोड़ाशिषि च भूतानद्यतने च लङ् ॥ ३ ॥
भूते लुङ् लिट् परोक्षेऽथ भाविन्यद्यतने च लुट् ।
लिङाशिषि च शेषेऽर्थे लृङ् भविष्यति लृङ् भवेत् ॥ ४ ॥
लिङ्निमिते क्रियातिपत्तौ परं नवात्मनेपदम् ।
पूर्वं नव परस्मैपदन्तिप्तसन्तीति प्रथमः पुमान् ॥ ५ ॥
सिप्थस्थ मध्यमनरो मिप्वस्मस् चोत्तमः पुमान् ।
त आताम् अन्तात्मने मुख्यः थासाथां ध्वञ्च मध्यमः ॥ ६ ॥
उत्तम इ वहि महि भूवाद्या धातवः स्मृताः ।
भुधिरेधिः पचिर्नन्दिर्ध्वंसि श्रंसिः पदिस्त्वदिः ॥ ७ ॥
शीघः क्रीड़ी जुहोतिश्च जहातिश्च दधात्यपि ।
दीव्यतिः स्वपितिर्नहिः सुनोतिर्वसिरेव च ॥ ८ ॥
तुदिर्मृ शतिर्मुञ्चतिः रुधिभु जिस्त्यजिस्तनिः । शवादिके विकरणे मनिश्चैव करोत्यपि
क्रीड़तिर्वृ ङो ग्रहिश्चोरिः पा नीर्यचश्च नायकाः ।
भुवि स्यात् तिङ् भवति सः भवतस्तौ भवन्ति ते ॥ १० ॥
भवसि त्वं युवां भवथो यूयं भवथ चाप्यहम् ।

भवाम्यावां भवावश्च भवामो ह्येधते कुलम् ॥ ११ ॥

एधेते द्वे तथैधन्ते एधसे त्वं हि मेधया । एधेथे च समेधध्वे ह्येधावहे धिया ॥ १२ ॥

एधामहे हरेर्भक्त्या पचतीत्यादि पूर्ववत् । भूयतेऽनुभूयतेऽसौ भावे कर्मणि वै यकि

बुभूषति सनीत्येवं णिचि भावयतीश्वरम् ।

यङि बोभूयते वाच्यं बोभोति स्याच्च यङ्लुकि ॥ १४ ॥

पुत्रीयति पुत्रकाम्येत्येवं पटपटायते । घटयत्यऽथ सनि णिचि बुभूषयति रूपकम् ॥

भवेद् भवेतां च लिङ्गि भवेयुश्च भवेः परे । भवेतश्च भवेतैवं भवेयश्च भवेव च भवेम च

एधेत एधेयातामेधेरन् मनसा श्रिया ।

एधेथाश्च एधेयाथामेधेध्वमेधैय एधेवहि एधेमहि ॥ १७ ॥

अस्तु तावद् भवतां लोटि भवन्तु भवताद् भव । भवतं भवत भवानि भवाव भवाम च

एधतामेधेतामेधन्तामेधैपचावहै पचामहै । अभ्यनन्दद्पचतामपचन्नपचस्तथा ॥ १९ ॥

अभवतमभवतापचमपचावापचाम च । ऐधतैधेतामैधध्वम् ऐधे चैधामहीरितम् ॥

अभूदभूतामभूवनभूश्चाभूवमेव लुङ् । ऐधिष्टैधिषातां नरावैधिष्ठा ऐधिषीदृशम् ॥ २१ ॥

लिटि बभूव बभूवतुः बभूवुश्च बभूविथ । बभूवथुर्बभूव च बभूविव बभूविम ॥ २२ ॥

पेचे पेचाते पेचिरे त्वमेधाञ्चकृषे तथा । एधाञ्चक्राथे पेचिध्वे पेचे पेचिमहे तथा ॥

लुटि भविता भवितारौ भवितारो हरादयः ।

भवितासि भवितास्थो भवितास्मस्तथा वयम् ॥ २४ ॥

पक्ता पक्तारौ पक्तारः पक्तासे त्वं शुभौदनम् । पक्ताध्वे पक्ताहे चाहं पक्तास्महेहरेश्वरम्

लिङ्गाशिषि सुखं भूयात् भूयास्तां हरिशङ्करौ ।

भूयासुस्ते च भूयास्त्वं युवां भूयास्तमीश्वरौ ॥ २६ ॥

भूयास्त यूयं भूयासमहं भूयास्म सर्वदा । यक्षीष्ट ह्येधिषीयास्तां यक्षीरन्नेधिषीय च

यक्षीवह्येधिषीमहिलिङ्वायक्ष्यतेतिलृङ् । अयक्ष्येतामयक्ष्यन्तायक्ष्येऽयक्ष्येथांयुवाम्

अयक्ष्यध्वमैधिष्यावह्यैधिष्याम हरेर्वयम् ।

लटि स्याद् भविष्यतीति एधिष्यामह ईदृशम् ॥ २९ ॥

एवं विभावयिष्यन्ति बोभविष्यति रूपकम् । घटयेत् पटयेत् तद्वत् पुत्रीयतिचकाम्यति

इत्यादिमहापुराणेआग्नेये तिङ्विभक्तिसिद्धरूपकथनंनाम

अष्टपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

## एकोनषष्ट्यधिकत्रिशततमोऽध्यायः

### कृत्सिद्धरूपम् ।

कुमार उवाच ।

कृतस्त्रिष्वपि विज्ञेया भावे कर्मणि कर्त्तरि ।
अज्ल्युट्क्तिन् घञो भावे युजकारत एव च ॥ १ ॥

अचि धर्मस्य विनय उत्कारः प्रकरस्तथा । देवो भद्रः श्रीकरश्च ल्युटि रूपन्तु शोभनम्

क्तिनि वृद्धिस्तुतिमती घञि भावोऽथ युच्यपि ।
कारणा भावनेत्यादि अकारे च चिकित्सया ॥ ३ ॥

तथा तव्यो ह्यनीयश्च कर्त्तव्यं करणीयकम् । देयं ध्येयश्चैव यति ण्यति कार्य्यश्च कृत्यकाः

कर्त्तरि क्तादयो ज्ञेया भावे कर्मणि च क्वचित् ।
गतो ग्रामं गतो ग्राम आश्लिष्टश्च गुरुस्त्वया ॥ ५ ॥

शतृङ्शानचौ भवन्एधमानो भवन्त्यपि । वुण्तृचौसर्वधातुभ्यो भावको भविता तथा

क्विवन्तश्च स्वयम्भूश्च भूते लिटः क्वसुन् कानच् ।
बभूविवान् पेचिवांश्च पेचानः श्रद्दधानकः ॥ ७ ॥

अणि स्युः कुम्भकाराद्या भूतेऽप्युणादयः स्मृताः ।
वायुः पायुश्च कारुः स्याद् बहुलं छन्दसीरितम् ॥ ८ ॥

इत्यादिमहापुराणेआग्नेयेकृत्सिद्धरूपकथनंनामैकोनषष्ट्यधिकत्रिशततमोऽध्यायः ।

# षष्ट्यधिकत्रिशततमोऽध्यायः

## स्वर्गपातालादिवर्गाः ।

**अग्निरुवाच ।**

स्वर्गादिनामलिङ्गो यो हरिस्तं प्रवदामि ते ।
स्वःस्वर्गनाकत्रिदिवा द्योदिवौ द्वे त्रिविष्टपम् ॥ १ ॥
देवा वृन्दारका लेखा रुद्राद्या गणदेवताः । विद्याधराऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः ॥
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।
देवद्विषोऽसुरा दैत्याः सुगतः स्यात् तथागतः ॥ ३ ॥
ब्रह्मात्मभूः सुरज्येष्ठो विष्णुर्नारायणो हरिः ।
रेवतीशो हली रामः कामः पञ्चशरः स्मरः ॥ ४ ॥
लक्ष्मीः पद्मालया पद्मा सर्वः सर्वेश्वरः शिवः ।
कपर्दोऽस्य जटाजूटः पिनाकोऽजगवन्धनुः ॥ ५ ॥
प्रथमाः स्युः पारिषदा मृडानी चण्डिकाऽम्बिका ।
द्वैमातुरो गजास्यश्च सेनानीरग्निभूर्गुहः ॥ ६ ॥
आखण्डलः सुनासीरः सुत्रामाणो दिवस्पतिः ।
पुलोमजा शचीन्द्राणी देवी तस्य तु वल्लभा ॥ ७ ॥
स्यात् प्रासादो वैजयन्तो जयन्तः पाकशासनिः । ऐरावतेऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः
ह्रादिनी वज्रमस्त्री स्यात् कुलिशम्भिदुरं पविः ।
व्योमयानं विमानोऽस्त्री पीयूषममृतं सुधा ॥ ६ ॥
स्यात् सुधर्मा देवसभा स्वर्गङ्गा सुरदीर्घिका ।
स्त्रियां बहुष्वप्सरसः स्वर्वेश्याउर्वशीमुखाः ॥ १० ॥
हाहा हूहूश्च गन्धर्वा अग्निर्वह्निर्धनञ्जयः । जातवेदाः कृष्णवर्त्मा आश्रयाशश्च पावकः

हिरण्यरेताः सप्तार्चिः शुक्रश्चैवाशुशुक्षणिः । शुचिरप्पित्तमौर्वस्तु वाड़वो वड़वानलः
वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ।
त्रिषु स्फुलिङ्गोऽग्निकणो धर्मराजः परेतराट् ॥ १३ ॥
कालोऽन्तको दण्डधरः श्राद्धदेवोऽथ राक्षसः ।
कौणपास्रपक्रव्यादा यातुधानश्च नैर्ऋतिः ॥ १४ ॥
प्रचेता वरुणः पाशी श्वसनः स्पर्शनोऽनिलः । सदागतिर्मातरिश्वाप्राणोमरुत्समीरणः
जवो रंहस्तरसी तु लघुक्षिप्रमरं द्रुतम् । सत्वरं चपलं तूर्णमविलम्बितमाशु च ॥१६॥
सततेऽनारताश्रान्तसन्तताविरतानिशम् । नित्यानवरताजस्रमप्यथातिशयो भरः ॥
अतिवेलभृशात्यर्थातिमात्रोद्गाढ़निर्भरम् । तीव्रैकान्तनितान्तानि गाढ़बाढ़दृढ़ानि च
गुह्यकेशो यक्षराजो राजराजो धनाधिपः । स्यात् किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः
निधिर्ना सेवधिर्व्योम त्वभ्रं पुष्करमम्बरम् ।
द्यौदिवौ चान्तरीक्षं खं काष्ठाशाककुभो दिशः ॥ २० ॥
अभ्यन्तरन्त्वन्तरालश्चक्रवाड़न्तु मण्डलम् । तड़ित्वान् वारिदो मेघस्तनयित्नुर्बलाहकः
कादम्बिनी मेघमाला स्तनितं गर्जितंतथा ।
शम्पाशतहदाह्रादिन्यैरावत्यः क्षणप्रभाः ॥ २२ ॥
तड़ित् सौदामिनी विद्युच्चञ्चला चपलाऽपि च ।
स्फूर्जथुर्वज्रनिष्पेषो वृष्टिघातस्त्ववग्रहः ॥ २३ ॥
धारा सम्पात आसारः शीकरोऽम्बुकणाः स्मृताः ।
वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ॥ २४ ॥
अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् । अपिधानतिरोधानपिधानच्छदनानि च
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ।
विधुः कुमुदबन्धुश्च बिम्बोऽस्त्री मण्डलं त्रिषु ॥ २६ ॥
कला तु षोड़शो भागो भित्तं शकलखण्डके ।
चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥ २७ ॥

लक्षणं लक्ष्मकं चिह्नं शोभा कान्तिर्द्युतिश्छविः ।
सुषमा परमा शोभा तुषारस्तुहिनं हिमम् ॥ २८ ॥
अवश्यायस्तु नीहारः प्रालेयः शिशिरो हिमः ।
नक्षत्रमृक्षं भन्तारा तारकाप्युडु वा स्त्रियाम् ॥ २६ ॥
गुरुर्जीव आङ्गिरस उशना भार्गवः कविः । विधुन्तुदस्तमो राहुर्लग्नं राश्युदयः स्मृतः
सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः । हरिदश्वब्रध्नपूषद्युमणिर्मिहिरो रविः ॥
परिवेषस्तु परिधिरुपसूर्य्यकमण्डले । किरणोऽस्रमयूखांशुगभस्तिघृणिधृष्णयः ॥३२॥
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ।
स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥ ३३ ॥
रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ।
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ॥ ३४ ॥
तिग्मं तीक्ष्णं खरं तद्वद् दिष्टोऽनेहा च कालकः ।
घस्रो दिनाहनी चैव सायं सन्ध्या पितृप्रसूः ॥ ३५ ॥
प्रत्यूषोऽऽहर्मुखं कल्यमुषःप्रत्यूषसी अपि । प्राह्ण पराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्वरी
यामी तमी तमिस्रा च ज्योत्स्नी चन्द्रिकयान्विता ।
आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी ॥ ३७ ॥
अर्द्धरात्रनिशीथौ द्वौ प्रदोषो रजनीमुखम् । सपर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम्
पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ।
कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥ ३६ ॥
अमावास्या त्वमावास्या दर्शः सूर्य्येन्दुसङ्गमः ।
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ॥ ४० ॥
संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि । कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्
स्याद् धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।
मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ॥ ४२ ॥

स्यादानन्दथुरानन्दः शर्मशातसुखानि च । श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलंशुभम्
भावुकं भविकं भव्यं कुशलं क्षेमर्मास्त्रयाम् ।
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ॥ ४४ ॥
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् ।
हेतुर्ना कारणं वीजं निदानं त्वादिकारणम् ॥ ४५ ॥
चित्तन्तु चेतो हृदयं स्वन्तं हृन्मानसम्मनः ।
बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥ ४६ ॥
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः । धीर्धारणावतीमेधा सङ्कल्पः कर्ममानसम्
सङ्ख्या विचारणा चर्चा विचिकित्सा तु संशयः ।
अध्याहारस्तर्कऊहः समौ निर्णयनिश्चयौ ॥ ४८ ॥
मिथ्यादृष्टिर्नास्तिकता भ्रान्तिर्मिथ्यामतिर्भ्रमः । अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।
मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ५० ॥
मोक्षोऽपवर्गोऽथाज्ञानमविद्याहम्मतिः स्त्रियाम् । विमर्दोत्थे परिमलो गन्धे जनमनोहरे
आमोदः सोऽतिनिर्हारी सुरभिर्घ्राणतर्पणः ।
शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डराः ॥ ५२ ॥
अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ।
हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ ५३ ॥
कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ॥ ५४ ॥
रोहितो लोहितो रक्तःशोणःकोकनदच्छविः । अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः
श्यावः स्यात् कपिशो धूम्रधूमलौ कृष्णलोहिते ।
कड़ारः कपिलः पिङ्गपिशङ्गौकद्रुपिङ्गलौ ॥ ५६ ॥
चित्रं किर्म्मीरकल्माषशवलैताश्च कर्वुरे । व्याहार उक्तिर्लपितमपभ्रंशोऽपशब्दकः ॥

तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ।
इतिहासः पुरावृत्तं पुराणं पञ्चलक्षणम् ॥ ५८ ॥
आख्यायिकोपलब्धार्था प्रबन्धः कल्पना कथा ।
समाहारः संग्रहस्तु प्रवह्लिका प्रहेलिका ॥ ५६ ॥
समस्या तु समासार्था स्मृतिस्तु धर्मसंहिता ।
आख्याह्वे चाभिधानञ्च वार्त्ता वृत्तान्त ईरितः ॥ ६० ॥
हूतिराकारणाह्वानमुपन्यासस्तु वाङ्मुखम् ।
विवादो व्यवहारः स्यात् प्रतिवाक्योत्तरे समे ॥ ६१ ॥
उपोद्घात उदाहारो ह्यथ मिथ्याभिशंसनम् ।
अभिशापो यशः कीर्त्तिः प्रश्नः पृच्छानुयोगकः ॥ ६२ ॥
आम्रेडितं द्विस्त्रिरुक्तं कुत्सानिन्दे च गर्हणे ।
स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ॥ ६३ ॥
अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।
विलापो विरोधोक्तिः संलापो भाषणं मिथः ॥ ६४ ॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः । उषती वागकल्याणी सङ्गतं हृदयङ्गमम् ॥६५॥
अत्यर्थमधुरं सान्त्वमबद्धं स्यादनर्थकम् । निष्ठुराश्लीलपरुषं ग्राम्यं वै सुनृपतं प्रिये ॥
सत्यं तथ्यमृतं सम्यङ्नादनिस्वाननिस्वनाः । आरवारावसंरावविरावा अथ मर्मरः ॥
स्वनिते वस्त्रपर्णानां भूषणानान्तु शिञ्जितम् ।
वीणाया निक्वणः क्वाणः तिरश्चां वाशितं रुतम् ॥ ६८ ॥
कोलाहलः कलकलो गीतं गानमिमे समे ।
स्त्री प्रतिश्रुत प्रतिध्वाने तन्त्रीकण्ठान्निसादकः ॥ ६६ ॥
काकली तु लले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ।
कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥ ७० ॥
समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ।

विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ७१ ॥

ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकन्तु शुषिरं कांस्यतालादिकं घनम्

चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।

मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योऽर्द्धकास्त्रयः ॥ ७३ ॥

स्याद् यशःपटहो ढक्का भेर्य्यामानकदुन्दुभिः ।

आनकः पटहो भेदा झर्झरीडिण्डिमादयः ॥ ७४ ॥

मर्दलः पणवस्तुल्यौ क्रियामानन्तु तालकः ।

लयः साम्यं ताण्डवस्तु नाट्यं लास्यञ्च नर्त्तनम् ॥ ७५ ॥

तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ।

राजा भट्टारको देवः साभिषेका च देव्यपि ॥ ७६ ॥

शृंगारवीरकरुणाद्भुतहास्यभयानकाः । वीभत्सरौद्रे च रसाः शृङ्गारः शुचिरुज्ज्वलः

उत्साहवर्द्धनो वीरः कारुण्यं करुणा घृणा ।

कृपा दया चानुकम्पाऽप्यनुक्रोशोऽप्यथो हसः ॥ ७८ ॥

हासो हास्यञ्च वीभत्सं विकृतं त्रिष्विदं द्वयम् ।

विस्मयोऽद्भुतमाश्चर्य्यं चित्रमप्यथ भैरवम् ॥ ७९ ॥

दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् । भयङ्करं प्रतिभयं रौद्रन्तूग्रममी त्रिषु ॥

चतुर्दश दरत्रासौ भीतिर्भीः साध्वसम्भयम् ।

विकारो मानसो भावोऽनुभावोभावबोधनः ॥ ८१ ॥

गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः । अनादरः परिभवःपरिभावस्तिरस्क्रिया

व्रीडा लज्जा त्रपा ह्रीः स्यादभिध्यानं धने स्पृहा ।

कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम् ॥ ८३ ॥

स्त्रीणां विलासविव्वोकविभ्रमा ललितं तथा ।

हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ॥ ८४ ॥

द्रवकेलिपरीहासाः क्रीड़ा लीला च कूर्दनम् ।

स्यादाच्छुरितकं हासः सोत्प्रासः समनाक्स्मितम् ॥ ८५ ॥
अधोभुवनपातालं च्छिद्रंश्वभ्रं वपा शुषिः। गर्त्तावटौ भुवि श्वभ्रे तमिश्रं तिमिरं तमः
सर्पः पृदाकुर्भुजगो दन्दशूको विलेशयः। विषं क्ष्वेडश्च गरलं निरयो दुर्गतिः स्त्रियाम्
पयः कीलालममृतमुदकं भुवनं वनम्। भङ्गस्तरङ्ग ऊर्मिर्वा कल्लोलोल्लोलकौ च तौ ॥
पृषन्तिबिन्दुपृषताः कूलं रोधश्च तीरकम्। तोयोत्थितं तत् पुलिनं जम्बालं पङ्ककर्दमौ

जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः।
आतरस्तरपण्यं स्याद् द्रोणी काष्ठाम्बुवाहिनी ॥ ९० ॥
कलुषश्चाविलोऽच्छस्तु प्रसन्नोऽथ गभीरकम्।
अगाधं दासकैवर्त्तौ शम्बूका जलशुक्तयः ॥ ९१ ॥

सौगन्धिकन्तु कह्लारं नीलमिन्दीवरं कजम्। स्यादुत्पलं कुवलयं सिते कुमुदकैरवे ॥
शालूकमेषां कन्दः स्यात् पद्मं तामरसङ्कजम्। नीलोत्पलं कुवलयं रक्तं कोकनदं स्मृतम्

करहाटः शिफा कन्दं किञ्जल्कः केशरोऽस्त्रियाम्।
खनिः स्त्रियामाकरः स्यात् पादाः प्रत्यन्तपर्वताः ॥ ९४ ॥

उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका। स्वर्गपातालवर्गाद्या उक्ता नानार्थकान् शृणु
इत्यादिमहापुराणे आग्नेये स्वर्गपातालादिवर्गकथनं नामषष्ट्यधिकत्रिशततमोऽध्यायः

---

## एकषष्ट्यधिकत्रिशततमोऽध्यायः

### अव्ययवर्गाः।

अग्निरुवाच।

आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे।
आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात् कोपपीड़योः ॥ १ ॥

पापकुत्सेषदर्थे कु धिग् जुगुप्सननिन्दयोः। चान्वाचयसमाहारेतरेतरसमुच्चये ॥ २ ॥

स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ।
स्वित्प्रश्ने च वितर्के च तु स्याद् भेदेऽवधारणे ॥ ३ ॥

सकृत्सहैकवारे स्यादाराद् दूरसमीपयोः । प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ॥ पुनःसदार्थयोःशश्वत् साक्षात्प्रत्यक्षतुल्ययोः । खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः इति हेतौ प्रकरणे प्रकाशादिसमाप्तिषु । प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि ॥

यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे ।
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथ च ॥ ८ ॥
वृथा निरर्थकाविध्योर्नानाऽनेकोभयार्थयोः ।
नु पृच्छायां विकल्पे च पश्चात् सादृश्ययोरनु ॥ ९ ॥

प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु । गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ॥१०॥

उपमायां विकल्पे वा सामित्वर्द्धे जुगुप्सिते ।
अमा सह समीपे च कं वारिणि च मूर्धनि ॥ ११ ॥

इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये । तूष्णीमर्थे सुखे जोषं किम्पृच्छायां जुगुप्सने ॥ नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने । अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम् ॥ हुं वितर्के परिप्रश्ने समयाऽन्तिकमध्ययोः । पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ॥

स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा ।
उररी उररी च विस्तारेऽङ्गीकृते त्रयम् ॥ १५ ॥

स्वर्गे परे च लोके स्वर्वार्त्तासम्भाषयोः किल । निषेधवाक्यालङ्कारे जिज्ञासावसरेखलु समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः । नामप्रकाशयोः प्रादुर्मिथोऽन्योन्यं रहस्यपि तिरोऽन्तर्द्धौ तिर्यगर्थे हा विषादशुगर्त्तिषु । अहहेत्यद्भुते खेदे हि हेतावधारणे ॥

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः ॥ १६ ॥
द्राग्झटित्यञ्जसाह्नाय सपदि द्राङ्मङ्क्षु च द्रुते ।

बलवत् सुष्ठु किमुत विकल्पे किं किमूत च ॥ २० ॥

तु हि च स्म ह वै पादपूरणे पूजनेऽप्यति । दिवाह्नीत्यथ दोषा च नक्तञ्च रजनाविति

तिर्यगर्थे साचि तिरोऽप्यथ सम्बोधनार्थकाः ।

स्युः प्याट्पाडङ्ग हे है भोः समया निकषा हिरुक् ॥ २२ ॥

अतर्किते तु सहसा स्यात् पुरः पुरतोऽग्रतः ।

स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ॥ २३ ॥

किञ्चिदीषन्मनागल्पे प्रेत्याऽमुत्र भवान्तरे ।

यथा तथा चैव साम्ये अहो हो इति विस्मये ॥ २४ ॥

मौने तु तूष्णीं तूष्णीकं सद्यः सपदि तत्क्षणे ।

दिष्ट्या शमुपयोषञ्चेत्यानन्देऽथान्तरेऽन्तरा ॥ २५ ॥

अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् । युक्ते द्वे साम्प्रतं स्थानेऽभीक्ष्णं शश्वदनारते

अभावे नह्यनो नापि मास्म मालञ्च वारणे ।

पक्षान्तरे चेद् यदि च तत्त्वे त्वद्धाऽञ्जसा द्वयम् ॥ २७ ॥

प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते । समन्ततस्तु परितः सर्वतो विष्वगित्यपि॥

अकामानुमतौ काममसूयोपगमेऽस्तु च ।

ननु च स्याद् विरोधोक्तौ कच्चित् कामप्रवेदने ॥ २९ ॥

निःसमं दुःसमं गर्ह्ये यथास्वन्तु यथायथम् ।

मृषा मिथ्या च वितथे यथार्थन्तु यथातथम् ॥ ३० ॥

स्युरेवन्तु पुनर्वैवेत्यवधारणवाचकाः । प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ॥३१॥

संवद् वर्षेऽवरे त्ववर्वागामेवं स्वयमात्मना । अल्पे नीचैर्महत्युच्चैः प्रायोभूम्न्यद्रुते शनैः

सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने । अस्ति सत्त्वे रुषोक्तावूमुं प्रश्नेऽनुनये त्वयि

हूं तर्के स्यादुषा रात्रेरवसाने नमो नतौ । पुनरर्थेऽङ्गनिन्दायां दुष्ठु सुष्ठु प्रशंसने ॥

सायं साये प्रगे प्रातः प्रभाते निकषाऽन्तिके । परुत्परार्य्यैषमोऽब्दे पूर्वे पूर्वतरे यति ॥

अद्यात्राऽह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरा परात् । तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥

उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि। ह्यो गतेऽनागतेऽह्नि श्वः परश्वः श्वःपरेऽहनि ॥
तदा तदानीं युगपदेकदा सर्वदा सदा। एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा ॥३८॥
इत्यादिमहापुराणे आग्नेये अव्ययवर्गकथनं नामैकषष्ट्यधिकत्रिशततमोऽध्यायः।

---

## द्विषष्ट्यधिकत्रिशततमोऽध्यायः

### नानार्थवर्गाः।

अग्निरुवाच।

आकाशे त्रिदिवे नाको लोकस्तु भुवने जने। पद्ये यशसि च श्लोकः शरे खड्गे च सायकः
आनकः पटहो भेरीकलङ्कोऽङ्कापवादयोः।
मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बु नोः ॥ २ ॥
स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके। महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक
शालावृकौ कपिश्वानौ मानं स्यान् मितिसाधनम्।
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥ ४ ॥
योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु। भोगः सुखे स्त्र्यादिभृतावब्जौ शङ्खनिशाकरौ
काके भगण्डौ करटौ दुश्चर्मा शिपिविष्टकः। रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाऽशुभे
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने।
निष्ठानिष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि ॥ ७ ॥
भूगोवाचस्त्विडा इलाः प्रगाढं भृशकृच्छ्रयोः। भृशप्रतिज्ञयोर्वाढं शक्तस्थूलौ दृढौ त्रिषु
विन्यस्तसंहतौ व्यूढौ कृष्णो व्यासेऽर्जुने हरौ।
पणो द्यूतादिषूत्सृष्टे भृशौ मूल्ये धनेऽपि च ॥ ६ ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसन्ध्यादिके गुणः।
श्रेष्ठेऽधिपे ग्रामणीः स्यात् जुगुप्साकरुणे घृणे ॥ १० ॥

तृष्णा स्पृहापिपासे द्वे विपणिः स्याद् वणिक्पथे ।
विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ११ ॥
प्रमाणं हेतुमर्य्यादाशास्त्रेयत्तापमातृषु । करणं क्षेत्रगात्रादावीरिणं शून्यमूषरम्॥१२॥
यन्ता हस्तिपके सूते वह्निज्वाला च हेतयः । श्रुतं शास्त्रावधृतयोर्युगपर्य्याप्तयोः कृतम्
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ।
विविक्तौ पूतविजनौ मूर्च्छितौ मूढसोच्छ्रयौ ॥ १४ ॥
अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु । निदानागमयोस्तीर्थमृषिजुष्टजले गुरौ ॥ १५ ॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।
स्त्री संविज्ज्ञानसम्भाषाक्रियाकाराजिनामसु ॥ १६ ॥
धर्मे रहस्युपनिषत् स्यादृतौ वत्सरे शरत् ।
पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ १७ ॥
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥ १८ ॥
विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे ।
वधूर्जाया स्नुषा स्त्री च वेधालेपोऽमृतं स्नुही ॥ १९ ॥
स्पृहा सम्प्रत्ययः श्रद्धा पण्डितम्मन्यगर्विती । ब्रह्मबन्धुरधिक्षेपे भानू रश्मिदिवाकरौ
ग्रावाणौ शैलपाषाणौ मूर्खनीचौ पृथग्जनौ । तरुशैलौ शिखरिणौ तनुस्त्वग्देहयोरपि
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च ।
उत्थानं पौरुषे तन्त्रे व्युत्थानं प्रतिरोधने ॥ २२ ॥
निर्य्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च । व्यसनं विपदि भ्रंशे दोषे कामजकोपजे
मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ २४ ॥
पैशून्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डश्चैव पारुष्यं क्रोधजोऽपि गणोऽष्टकः
अकर्म्मगुह्ये कौपीनं मैथुनं सङ्गतौ रतौ । प्रधानं परमार्था धीः प्रज्ञानं बुद्धिचिह्नयोः ॥

क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः । आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥
रत्नं स्वजातिश्रेष्ठेऽपि लक्ष्म चिह्नप्रधानयोः । कलापो भूषणे बर्हे तूणीरे संहतेऽपि च

तल्पं शय्याट्टदारेषु डिम्भौ तु शिशुबालिशौ ।
स्तम्भौ स्थूणाजडीभावौ सभ्ये संसदि वै सभा ॥ २६ ॥

किरणप्रग्रहौ रश्मी धर्म्माः पुण्ययमादयः । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ॥
प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । समयाः शपथाचारकालसिद्धान्तसंविदः ॥३१॥
अत्ययोऽतिक्रमे कृच्छ्रे सत्यं शपथतथ्ययोः । वीर्य्यं बलप्रभावौ च रूप्यं रूपे प्रशस्तके
दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् । महारण्ये दुर्गपथे कान्तारः पुन्नपुंसकम् ॥३३॥

यमानिलेन्द्रचन्द्रार्कविष्णुसिंहादिके हरिः ।
दरोऽस्त्रियां भये श्वभ्रे जठरः कठिनेऽपि च ॥ ३४ ॥

उदारो दातृमहतोरितरस्त्वन्यनीचयोः । चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ॥

बलिः करोपहारादौ सैन्यस्थैर्य्यादिके बलम् ।
स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ॥ ३६ ॥

शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः । द्यूताक्षे सारिफलकेऽप्याकर्षोऽथाऽक्षमिन्द्रिये

नाद्यूताङ्गे च कर्षे च व्यवहारे कलिद्रुमे ।
उष्णीषः स्यात् किरीटादौ कर्षूः कुल्याभिधायिनी ॥ ३८ ॥

प्रत्यक्षेऽधिकृतेऽध्यक्षः सूर्य्यवह्नी विभावसू । शृङ्गारादौ विषे वीर्य्ये गुणेरागेद्रवे रसः

तेजःपुरीषयोर्वर्च आगः पापापराधयोः ।
छन्दः पद्येऽभिलासे च साधीयान् साधुबाढयोः ।
व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्द्वर्कास्तमोनुदः ॥ ४० ॥

इत्यादिमहापुराणेआग्नेयेनानार्थवर्गकथनं नामद्विषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

## त्रिषष्ट्यधिकत्रिशततमोऽध्यायः

### भूमिवनौषध्यादिवर्गाः ।

**अग्निरुवाच**

वक्ष्ये भूपुराद्रिवनौषधिसिंहादिवर्गकान् ।
भूरनन्ता क्षमा धात्री क्ष्माप्याकुः स्याद् धरित्र्यपि ॥ १ ॥
मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।
जगत्त्रिपिष्टपं लोकं भुवनं जगती समा ॥ २ ॥
अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः । सरणिः पद्धतिः पद्या वर्त्तन्ये कपदीतिच
पूः स्त्री पुरीनगर्य्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत् तु यन्मूलनगरात् पुरम् ॥ ४ ॥
तच्छाखानगरं वेशो वेश्याजनसमाश्रयः । आपणस्तु निषद्यायां विपणि पण्यवीथिका
रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ।
प्राकारो वरणः शालः प्राचीरं प्रान्ततो वृतिः ॥ ६ ॥
भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।
वासः कूटो द्वयोः शाला सभा सञ्जवनन्त्विदम् ॥ ७ ॥
चतुःशालं मुनीनान्तु पर्णशालोटजोऽस्त्रियाम् ।
चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा ॥ ८ ॥
हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ।
स्त्री द्वार्द्वारं प्रतीहारः स्याद् वितर्दिस्तु वेदिका ॥ ६ ॥
कपोतपालिकायान्तु विटंकं पुं नपुंसकम् । कवाटमवरं तुल्ये निःश्रेणिस्त्वधिरोहिणी
सम्मार्जनी शोधनी स्यात् सङ्करोऽवकरस्तथा । अद्रिगोत्रगिरिग्रावा गहनं काननं वनम्
आरामः स्यादुपवनं कृत्रिमं वनमेव यत् । स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥१२॥

वीथ्यालिरावलिः पङ्क्तिश्रेणीलेखास्तु राजयः ।
वानस्पत्यः फलैः पुष्पात् तैरपुष्पाद् वनस्पतिः ॥ १३ ॥
ओषध्यः फलपाकान्ताः पलाशी द्रुद्रुमागमाः ।
स्थाणु वा ना ध्रुवः शङ्कुः प्रफुल्लोत्फुल्लसंस्फुटाः ॥ १४ ॥

पलाशं छदनं पर्णमिध्ममेधः समित् स्त्रियाम् । बोधिद्रुमश्चलदलो दधित्थग्राहिमन्मथाः
तस्मिन् दधिफलः पुष्पफलदन्तशठावपि । उडुम्बरे हेमदुग्धः कोविदारे द्विपत्रकः ॥
समपर्णो विशालत्वक् कृतमालं सुवर्णकः । आरेवतव्याधिघातसम्पाकचतुरङ्गुलाः
स्याज्जम्बीरे दन्तशठो वरुणे तिक्तशाखकः । पुन्नागे पुरुषस्तुङ्गः केशरो देववल्लभः ॥
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः । वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ॥
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ । पीलौ गुडफलः स्रंसी नादेयी चाम्बुवेतसः ॥

शोभाञ्जने शिग्रुतीक्ष्ण गन्धकाक्षीरमोचकाः ।
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ॥ २१ ॥
गालवः शावरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।
शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ २२ ॥
वैकङ्कतः श्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ।
तिन्दुकः स्फूर्जकः कालो नादेयी भूमिजम्बुकः ॥ २३ ॥
काकतिन्दी पीलुकः स्यात् पाटलिर्मोक्षमुष्ककौ ।
क्रमुकः पट्टिकाख्यः स्यात् कुम्भी कैटर्य्यकट्फले ॥ २४ ॥

वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु । सर्जकासनजीवाश्चपीतशालेऽथमालके
सर्जाश्वकर्णौ वीरेन्द्रौ इन्द्रद्रुः ककुभोऽर्जुनः । इङ्गुदी तापसतरुर्मोचाः शाल्मलिरेवच
चिरबिल्वो नक्तमालः करजश्च करञ्जके । प्रकीर्य्यः पूतिकरजो मर्कट्यङ्गारवल्लरी ॥
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः । गायत्री बालतनयः खदिरो दन्तधावनः ॥
अरिमेदो विट्खदिरे कदरः खदिरे सिते । पञ्चाङ्गुलो वर्धमानश्चञ्चुर्गन्धर्वहस्तकः ॥

पिण्डीतको मरुवकः पीतदारु च दारु च ।

देवदारुः पूतिकाष्ठं श्यामा तु महिलाह्वया ॥ ३० ॥
लतागोविन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली । मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः
श्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः । पीतद्रुः सरलश्चाथ निचुलोऽम्बुज इज्जलः ॥
काकोडुम्बरिका फल्गुररिष्टः पिचुमर्दकः । सर्वतोभद्रको निम्बे शिरीषस्तु कपीतनः
वकुलो वञ्जुलः प्रोक्तः पिच्छिलाऽगुरुशिंशपाः ।
जया जयन्ती तर्कारी कणिका गणिकारिका ॥ ३४ ॥
श्रीपर्णमग्निमन्थः स्याद् वत्सकी गिरिमल्लिका ।
कालस्कन्दस्तमालः स्यात् तन्दुलीयोऽल्पमारिषः ॥ ३५ ॥
सिन्धुवारस्तु निर्गुण्डी सैवास्फीता वनोद्भवा ।
गणिका यूथिकाऽम्बष्ठा सप्तला नवमालिका ॥ ३६ ॥
अतिमुक्तः पुण्ड्रकः स्यात् कुमारी तरणिः सहा ।
तत्र शोणे कुरुवकस्तत्र पीते कुरुण्टकः ॥ ३७ ॥
नीलाझिण्टी द्वयोर्बाणा झिण्टी सैरीयकस्तथा ।
तस्मिन् रक्ते कुरुवकः पीते सहचरी द्वयोः ॥ ३८ ॥
धुस्तूरः कितवो धूर्त्तो रुचको मातुलुङ्गके । समीरणो मरुवकःप्रस्थपुष्पः फणिज्झकः
कुठेरकस्तु पर्णासेऽथास्फीतो वसुकार्कके ।
शिवमल्ली पाशुपती वृन्दा वृक्षादनी तथा ॥ ४० ॥
जीवन्तिका वृक्षरुहा गुडूची तन्त्रिकाऽमृता ।
सोमवल्ली मधुपर्णी मूर्वा तु मोरटी तथा ॥ ४१ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।
पाठाऽम्बष्ठा विद्धकर्णी प्राचीना वनतिक्तिका ॥ ४२ ॥
कटुः कटुम्भरा चाथ चक्राङ्गी शकुलादनी । आत्मगुप्ता प्रावृषायी कपिकच्छुश्च मर्कटी
अपामार्गः शैखरिकः प्रत्यक्पर्णी मयूरकः ।
फञ्जिका ब्राह्मणी भार्गी द्रवन्ती शम्बरी वृषा ॥ ४४ ॥

मण्डूकपर्णी भण्डीरी समङ्गा कालमेषिका।
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ॥ ४५ ॥
पृश्निपर्णी पृथक्पर्णी कलशिर्धावनिर्गुहा।
निदिग्धिका स्पृशी व्याघ्री क्षुद्रा दुस्पर्शया सह ॥ ४६ ॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका।
कालमेषी कृष्णफला वाकुची पूतिफल्यऽपि ॥ ४७ ॥
कणोषणोपकुल्या स्याच्छ्रेयसी गजपिप्पली।
चव्यन्तु चविका काकचिञ्ची गुञ्जे तु कृष्णला ॥ ४८ ॥
विश्वा विषा प्रतिविषा वनशृङ्गाटगोक्षुरौ। नारायणी शतमूली कालेयकहरिद्रवः ॥
दार्वी पचम्पचा दारु शुक्ला हैमवती वचा।
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ ५० ॥
आस्फोता गिरिकर्णी स्यात् सिंहास्यो वासको वृषः।
मिशो मधुरिकाच्छत्रा कोकिलाक्षेक्षुरक्षुरा ॥ ५१ ॥
विडङ्गोऽस्त्री कृमिघ्नः स्यात् वज्रद्रुस्नुक्स्नुही सुधा।
मृद्वीका गोस्तनी द्राक्षा वला वाट्यालकस्तथा ॥ ५२ ॥
काला मसूरविदला त्रिपुटा त्रिवृता त्रिवृत्। मधुकं क्लीतकं यष्टिमधुका मधुयष्टिका
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च या सिता।
गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥ ५४ ॥
मोचा रम्भा च कदली भण्टाकी दुष्प्रधर्षिणी।
स्थिरा ध्रुवा सालपर्णी शृङ्गी तु वृषभो वृषः ॥ ५५ ॥
गाङ्गेरुकी नागबला मुषली तालमूलिका।
ज्योत्स्नी पटोलिका जाली अजशृङ्गी विषाणिका ॥ ५६ ॥
स्याल्लाङ्गलिक्यग्निशिखा ताम्बूली नागवल्ल्यपि।
हरेणू रेणुका कौन्ती ह्रीवेरो दिव्यनागरम् ॥ ५७ ॥

कालानुसार्य्यवृद्धश्मपुष्पशीतशिवानि तु। शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा
ग्रन्थिपर्णं शुकं बर्हि बला तु त्रिपुटा त्रुटिः। शिवा तामलकी चाथ हनुर्हट्टविलासिनी
कुटं नटं दशपुरं वानेयं परिपेलवम्। तपस्विनी जटामांसी पृक्का देवी लता लशूः॥

कर्चुरको द्राविड़को गन्धमूली शठी स्मृता।
स्याद्दक्षगन्धा छगलान्त्रा वेगी वृद्धदारकः॥ ६१॥
तुण्डिकेरी रक्तफला बिम्बका पीलुपर्ण्यपि।
चाङ्गेरी चक्रिकाम्बष्ठा स्वर्णक्षीरी हिमावती॥ ६२॥
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि।
जीवन्ती जीवनी जीवा भूमिनिम्बः किराततः॥ ६३॥

कूर्चशीर्षो मधुकरश्चन्द्रः कपिवृकस्तथा। दद्रुघ्नः स्यादेडगजो वर्षाभूः शोथहारिणी॥
कुनन्दती निकुम्भस्त्रा यमानी वार्षिका तथा। लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः॥

वाराही वरदा गृष्टिः काकमाची तु वायसी।
शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः॥ ६६॥

अवाक्पुष्पी कारवी च सरणा तु प्रसारणी। कटम्भरा भद्रबला कर्वूरश्च शटी ह्यथ

पटोलः कुलकस्तिक्तः कारवेल्लः कटिल्लकः।
कुष्माण्डकस्तु कर्कारुरिर्वारुः कर्कटी स्त्रियौ॥ ६८॥
इक्ष्वाकुः कटुतुम्बी स्यात् विशाला त्विन्द्रवारुणी।
अर्शोऽघ्नः शूरणः कन्दो मुस्तकः कुरुविन्दकः॥ ६९॥

वंशे त्वक्सारकर्मारवेणुमस्करतेजनाः। छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे॥
तृणराजाह्वयस्तालो घोण्टा क्रमुकपूगकौ। शार्दूलद्वीपिनौ व्याघ्रे हर्य्यक्षः केशरी हरिः

कोलः पोत्री वराहः स्यात् कोक ईहामृगो वकः।
लूतोर्णनाभौ तु समौ तन्तुवायश्च मर्कटे॥ ७२॥
वृश्चिकः शूककीटः स्यात् सारङ्गस्तोककौ समौ।
कृकवाकुस्ताम्रचूड़ः पिकः कोकिल इत्यपि॥ ७३॥

काके तु करटारिष्टौ बकः कह्व उदाहृतः । कोकश्चक्रश्चक्रवाको कादम्बः कलहंसकः ॥
पतङ्गिका पुत्तिका स्यात् सरघा मधुमक्षिका । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥
केकी शिख्यस्य वाक् केका शकुन्तिशकुनीद्विजाः ।
स्त्री पक्षतिः पक्षमूलञ्चुस्तोटिरुभे स्त्रियौ ॥ ७६ ॥
गतिरुड्डीनसण्डीनौ कुलायो नीडमस्त्रियाम् ।
पेशी कोषो द्विहीनेऽण्डं पृथुकः शावकः शिशुः ॥ ७७ ॥
पोतः पाकोऽर्भको डिम्भः सन्दोहव्यूहको गणः ।
स्तोमौघनिकरव्राता निकुरम्बकदम्बकम् ।
सङ्घातसञ्चयौ वृन्दं पुञ्जराशी तु कूटकम् ॥ ७८ ॥
इत्यादिमहापुराणे आग्नेये भूमिवनौषध्यादिवर्गकथनंनाम
त्रिषष्ट्यधिकत्रिशततमाऽध्यायः ।

---

## चतुःषष्ट्यधिकत्रिशततमोऽध्यायः

### नृब्रह्मक्षत्रविट्शूद्रवर्गाः ।

अग्निरुवाच ।

नृब्रह्मक्षत्रविट्शूद्रवर्गान् वक्ष्येऽथ नामतः । नरःपञ्चजनाःमर्त्या योषिद्योषाऽवला वधूः
कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका ।
कुलटा पुंश्चल्यसती नग्निका स्त्री च कोटवी ॥ २ ॥
कात्यायन्यर्धवृद्धा या सैरिन्ध्री परवेश्मगा ।
असिक्नी स्यादवृद्धा या मालिनी तु रजस्वला ॥ ३ ॥
वारस्त्री गणिका वेश्या भ्रातृजायास्तु यातरः ।
ननन्दा तु स्वसा पत्युः सपिण्डास्तु सनाभयः ॥ ४ ॥

समानोदर्य्यसोदर्य्यसगर्भसहजाः समा । सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥
दम्पती जम्पती भार्य्यापती जायापती च तौ ।
गर्भाशयो जरायुः स्यादुल्वञ्च कललोऽस्त्रियाम् ॥ ६ ॥
गर्भो भ्रूण इमौ तुल्यौ क्लीबः शण्ढो नपुंसकम् ।
स्यादुत्तानशया डिम्भा बालो माणवकः स्मृतः ॥ ७ ॥
पिचिण्डिलो बृहत्कुक्षिरभ्रटो नतनासिके ।
विकलाङ्गस्तु पोगण्ड आरोग्यं स्यादनामयम् ॥ ८ ॥
स्याद्देडे वधिरः कुब्जे गडुलः कुकरे कुनिः । क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तुपीनसः
स्त्री क्षुत् क्षुतं क्षयं पुंसि कासस्तु क्षवथुः पुमान् ।
शोथस्तु श्वयथुः कोफः पादस्फोटो विपादिका ॥ १० ॥
किलासं सिध्मकच्छान्तु पाम पामा विचर्चिका ।
कोठो मण्डलकं कुष्ठं श्वित्रे दुर्नामकार्शसी ॥ ११
आनाहस्तु विबन्धः स्याद् ग्रहणी रुक्प्रवाहिका ।
वीजवीर्य्येन्द्रियं शुक्रं पललं क्रव्यमामिषम् ।
बुक्काऽग्रमांसं हृदयं हन्मेदस्तु वपा वसा ।
पश्चाद्ग्रीवा शिरा मन्या नाड़ी तु धमनिः शिरा ॥ १३ ॥
तिलकं क्लोम मस्तिष्कं दूषिका नेत्रयोर्मलम् ।
अन्त्रं पुरी तद्गुल्मस्तु प्लीहा पुंस्यऽथ वस्नसा ॥ १४ ॥
स्नायुः स्त्रियां कालखण्डयकृती तुसमे इमे ।
स्यात् कर्पूरः कपालोऽस्त्री कीकसङ्कुल्यमस्थि च ॥ १५ ॥
स्याच्छरीरास्थ्नि कङ्कालः पृष्ठास्थ्नि तु कशेरुका ।
शिरोऽस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ १६ ॥
अङ्गं प्रतीकोऽवयवः शरीरं वर्ष्म विग्रहः ।
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ॥ १७ ॥

पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः । कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे

स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ।

भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी ॥ १६ ॥

पिचिण्डकुक्षी जठरोदरं तुन्दं कुचौ स्तनौ ।

चूचुकन्तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ २० ॥

स्कन्दो भुजशिरोंऽशोऽस्त्री सन्धी तस्यैव जत्रुणी ।

पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ॥ २१ ॥

प्रादेशतालगोकर्णास्तर्जन्यादियुते तते । अङ्गुष्ठे सकनिष्ठे स्याद् वितस्तिर्द्वादशाङ्गुलः

पाणौ च पेटप्रतलप्रहस्ता विस्तृताङ्गुलौ । बद्धमुष्टिकरो रत्निररत्निः स कनिष्ठवान् ॥

कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका ।

अधः स्याच्चिबुकञ्चोष्ठादथ गण्डौ गलो हनुः ॥ २४ ॥

अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने । चिकुरः कुन्तलो बालः प्रतिकर्म प्रसाधनम्

आकल्पवेशौ नेपथ्यं प्रत्यक्ष्यं खेलयोगजम् । चूड़ामणिः शिरोरत्नं तरलो हारमध्यगः

कर्णिका तालपत्रं स्याल्लम्बनं स्याल्ललन्तिका ।

मञ्जीरो नूपुरं पादे किङ्किणी क्षुद्रघण्टिका ॥ २७ ॥

दैर्घ्यमायाम आरोहः परिणाहो विशालता । पटच्चरं जीर्णवस्त्रं संव्यानञ्चोत्तरीयकम्

रचना स्यात् परिस्पन्द आभोगः परिपूर्णता । समुद्गकः सम्पुटकः प्रतिग्राहः पतद्ग्रहः

इत्यादिमहापुराणे आग्नेये नृब्रह्मक्षत्रविट्शूद्रवर्गकथनं नाम

चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ।

———

# पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः

## ब्रह्मवर्गः ।

### अग्निरुवाच ।

वंशोऽन्ववायो गोत्रं स्यात् कुलान्यभिजनान्वयौ ।
मन्त्रव्याख्याकृदाचार्य्य आदेष्टा त्वध्वरे व्रती ॥ १ ॥
यष्टा च यजमानः स्यात् ज्ञात्वारम्भ उपक्रमः ।
सतीर्थ्याश्चैकगुरवः सभ्याः सामाजिकास्तथा ॥ २ ॥
सभासदः सभास्तारा ऋत्विजो याजकाश्च ते ।
अध्वर्यूदगातृहोतारो यजुःसामग्विदः क्रमात् ॥ ३ ॥
चषालो यूपकटकः समे स्थण्डिलचत्वरे ।
आमिक्षा सा शृतोष्णे या क्षीरे स्याद् दधियोगतः ॥ ४ ॥

पृषदाज्यं सदध्याज्ये परमान्नन्तु पायसम् । उपाकृतः पशुरसौ योऽभिमन्त्य क्रतौ हतः परम्पराकं समनं प्रोक्षणञ्च वधार्थकम् । पूजा नमस्याऽपचितिः सपर्य्यार्चार्हणाःसमाः वरिवस्या तु शुश्रूषा परिचर्य्याप्युपासनम् । नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्

मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ।
कल्पे विधिक्रमौ ज्ञेयौ विवेकः पृथगात्मता ॥ ८ ॥

संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः । भिक्षुः परिव्राट् कर्मन्दी पाराशर्य्यपि मस्करी ऋषयः सत्यवचसः स्नातकश्चाप्लुतव्रती । ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ शरीरसाधनापेक्षं नित्यं यत् कर्म तद्यमः । नियमस्तु स यत्कर्मानित्यमागन्तुसाधनम्

स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ११ ॥

इत्यादिमहापुराणेआग्नेये ब्रह्मवर्गकथनंनामपञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

# षट्षष्ट्यधिकत्रिशततमोऽध्यायः

## क्षत्रविट्शूद्रवर्गाः ।

अग्निरुवाच ।

मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ॥ १ ॥
चक्रवर्त्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ।
मन्त्री धीसचिवोऽमात्यो महामात्राः प्रधानकाः ॥ २ ॥
द्रष्टरि व्यवहाराणां प्राड्विवाकाऽक्षदर्शकौ ।
भौरिकः कनकाध्यक्षोऽथाध्यक्षाधिकृतौ समौ ॥ ३ ॥
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ४ ॥

षण्डो वर्षवरस्तुल्याः सेवकार्थ्यनुजीविनः । विषयानन्तरो राजा शत्रुर्मित्रमतः परम्
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।
चरः स्पशः स्यात् प्रणिधिरुत्तरः काल आयतिः ॥ ६ ॥

तत्कालस्तु तदात्वं स्यादुदर्कः फलमुत्तरम् । अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ॥
भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका । प्रभिन्नो गर्जितो मत्तो वमथुः करशीकरः
स्त्रियां शृणिस्त्वङ्कुशोऽस्त्री परिस्तोमः कुथो द्वयोः ।
कर्णीरथः प्रवहणं दोला प्रेङ्खादिका स्त्रियाम् ॥ ६ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
भटा योधाश्च योद्धारः कञ्चुको वारणोऽस्त्रियाम् ॥ १० ॥

शीर्षण्यञ्च शिरस्त्रेऽथ तनुत्रं वर्म्मदंशनम् । आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्
व्यूहस्तु बलविन्यासश्चक्रञ्चानीकमस्त्रियाम् ।

एकेभैकरथा त्र्यश्वाः पत्तिः पञ्चपदातिका ॥ १२ ॥
पत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥ १३ ॥
अनीकिनी दशानीकिन्योऽक्षौहिण्यो गजादिभिः ।
धनुः कोदण्डइष्वासौ कोटिरस्याटनी स्मृता ॥ १४ ॥
लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ १५ ॥
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । असिर्ऋष्टिश्च निस्त्रिंशः करवालः कृपाणवत्॥
त्सरुः खड्गस्य मुष्टौ स्यादीली तु करपालिका ।
द्वयोः कुठारः सुधितिश्छुरिका चासिपुत्रिका ॥ १७ ॥
प्रासस्तु कुन्तो विज्ञेयः सर्वला तोमरोऽस्त्रियाम् ।
वैतालिका बोधकरा मागधा वन्दिनःस्तुतौ ॥ १८ ॥
संशप्तकास्तु समयात् सङ्ग्रामादनिवर्त्तिनः ।
पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम् ॥ १९ ॥
अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ।
अहमहमिका सा स्याद् योऽहंङ्कारः परस्परम् ॥ २० ॥
शक्तिः पराक्रमः प्राणः शौर्यं स्थानसहो बलम् ।
मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ २१ ॥
अभ्यवस्कन्दनन्त्वभ्यासादनं विजयो जयः । निर्वासनं संज्ञपनं सारणं प्रतिघातनम् ॥
स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
विशो भूमिस्पृशो वैश्या वृत्तिर्वर्त्तनजीवने ॥ २३ ॥
कृष्यादिवृत्तयोज्ञेया कुसीदं वृद्धिजीविका ।
उद्धारोऽर्थप्रयोगः स्यात् कणिशं शस्यमञ्जरी ॥ २४ ॥
किंशारुः शस्यशूकं स्यात् स्तम्बो गुच्छस्तृणादिनः ।

धान्यं व्रीहिः स्तम्बकरिः कडङ्गरो बुसं स्मृतम् ॥ २५ ॥
माषादयः शमीधान्ये शुकधान्ये यवादयः ।
तृणधान्यानि नीवाराः शूर्पं प्रस्फोटनं स्मृतम् ॥ २६ ॥
स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ । समानौ रसवत्यान्तु पाकस्थानं महानसे
पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ।
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ॥ २८ ॥
क्लीबेऽम्बरीषं भ्राष्ट्रो ना कर्कर्य्यालुर्गलन्तिका ।
आलिञ्जरः स्यान्मणिकं सुषवी कृष्णजीरके ॥ २९ ॥
आरनालस्तु कुल्माषं वाह्लीकं हिङ्गुरामठम् ।
निशा हरिद्रा पीता स्त्री खण्डे मत्स्यण्डिफाणिते ॥ ३० ॥
कूर्चिका क्षीरविकृतिः स्निग्धं मसृणचिक्कणम् ।
पृथुकः स्याच्चिपिटको धाना भ्रष्टयवाःस्त्रियः ॥ ३१ ॥
जेमनं लेप आहारो माहेयी सौरभी च गौः ।
युगादीनाञ्च वोढारो युग्यप्रासङ्ग्यशाटकाः ॥ ३२ ॥
चिरसूता वष्कयणी धेनुः स्यान्नवसूतिका । सन्धिनीवृषभाकान्तावहेद्गर्भोपघातिनी
पण्याजीवो ह्यापणिको न्यासश्चोपनिधिः पुमान् ।
विपणो विक्रयः सङ्ख्याः सङ्ख्येये ह्यादश त्रिषु ॥ ३४ ॥
विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ।
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥ ३५ ॥
पङ्क्तेः शतसहस्रादि क्रमाद् दशगुणोत्तरम् ।
मानन्तु लाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ३६ ॥
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।
सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ॥ ३७ ॥
तुला स्त्रियां पलशतं भारः स्याद् विंशतिस्तुलाः ।

कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः ॥ ३८ ॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ॥ ३९ ॥
शुल्वमौदुम्बरं लौहे तीक्ष्णं कालायसायसी ।
क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ४० ॥
गरलं माहिषं शृङ्गं त्रपुसीसकपिच्चटम् ।
हिण्डीरोऽब्धिकफः फेणो मधूच्छिष्टन्तु सिक्थकम् ॥ ४१ ॥
रङ्गवङ्गे पिचुस्तूलो कुलटी तु मनःशिला ।
यवक्षारश्च पाक्यः स्यात् त्वक्क्षीरा वंशलोचना: ॥ ४२ ॥
वृषला जघन्यजाः शूद्राश्चाण्डालान्त्याश्च शङ्कराः ।
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ॥ ४३ ॥
रङ्गाजीवश्चित्रकरस्त्वष्टा तक्षा च वर्धकिः ।
नाड़िन्धमः स्वर्णकारो नापितान्तावसायिनः ॥ ४४ ॥
जावालः स्यादजाजीवो देवाजीवस्तु देवलः ।
जायाजीवास्तु शैलूषा भृतको भृतिभुक् तथा ॥ ४५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः । विहीनोऽपसदो जाल्मोभृत्येदासेरचेटकाः
पटुस्तु पेशलो दक्षो मृगयुर्लुब्धकः स्मृतः ।
चाण्डालस्तु दिवाकीर्त्तिः पुस्तं लेप्यादिकर्मणि ॥ ४७ ॥
पञ्चालिका पुत्रिका स्याद् वर्करस्तरुणः पशुः ।
मञ्जूषा पेटकः पेडा तुल्यसाधारणौ समौ ।
प्रतिमा स्यात् प्रतिकृतिर्वर्गा ब्रह्मादयः स्मृताः ॥ ४८ ॥

इत्यादिमहापुराणेआग्नेयेक्षत्रविट्शूद्रवर्गकथनंनामषट्षष्ट्यधिकत्रिशततमोऽध्यायः ।

# सप्तषष्ट्यधिकत्रिशततमोऽध्यायः

## सामान्यनामलिङ्गानि ।

अग्निरुवाच ।

सामान्यान्यथ वक्ष्यामि नामलिङ्गानि तच्छृणु ।
सुकृती पुण्यवान् धन्यो महेच्छस्तु महाशयः ॥ १ ॥
प्रवीणनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः । स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे ॥
कृती कृतज्ञः कुशल आसक्तोद्युक्त उत्सुकः ।
इभ्य आढ्यः परिवृढो ह्यधिभूर्नायकोऽधिपः ॥ ३ ॥
लक्ष्मीवान् लक्ष्मणः श्रीलः स्वतन्त्रः स्वैर्य्यपावृतः ।
खलपूः स्याद् बहुकरो दीर्घसूत्रश्चिरक्रियः ॥ ४ ॥
जाल्मोऽसमीक्ष्यकारी स्यात् कुण्ठो मन्दः क्रियासु यः ।
कर्मशूरः कर्मठः स्याद् भक्षको घस्मरोऽद्मरः ॥ ५ ॥
लोलुपो गर्धनो गृध्नुर्विनीतप्रस्थितौ तथा । धृष्टे धृष्णुर्वियातश्च निभृतः प्रतिभान्विते
अधीरो भीरुको भीरुर्वन्दारुरभिवादके । भूष्णुर्भविष्णुर्भविता ज्ञाता विदुरविन्दुकौ
मत्तशौण्डोत्कटक्षीवाश्चण्डस्त्वत्यन्तकोपनः ।
देवानञ्चति देवद्र्यङ् विश्वद्र्यङ् विश्वगञ्चति ॥ ८ ॥
यः सहाञ्चति स सध्र्यङ् स तिर्य्यङ् यस्तिरोऽञ्चति ।
वाचोयुक्तिः पटुर्वाग्मी वावदूकश्च वक्तरि ॥ ९ ॥
स्याज्जल्पकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
अपध्वस्तो धिक्कृतः स्याद् बद्धे कीलितसंयतौ ॥ १० ॥
घरणः शब्दनो नान्दीवादी नान्दीकरः समाः । व्यसनार्त्तोपरक्तौ द्वौ बद्धे कीलितसंयतौ
विहस्तव्याकुलौ तुल्यौ नृशंसक्रूरघातुकाः । पापो धूर्त्तो वञ्चकःस्यान्मूर्खे वैधेहबालिशौ

कदर्य्ये कृपणक्षुद्रौ मार्गणो याचकार्थिनौ। अहङ्कारवानहंयुःस्याच्छुभंयुस्तु शुभान्वितः
कान्तं मनोरमं रुच्यं हृद्याभीष्टे ह्यभीप्सिते। असारं फल्गु शून्यं वै मुख्यवर्य्यवरेण्यकाः

श्रेयान् श्रेष्ठः पुष्कलः स्यात् प्राग्र्याग्र्यग्रीयमग्रिमम्।
वड्डोरु विपुलं पीनपीव्नी तु स्थूलपीवरे ॥ १५ ॥

स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु। मात्राकुटीलवकणा भूयिष्ठं पुरुहं पुरु
अखण्डं पूर्णसकलमुपकण्ठान्तिकाभितः। समीपे सन्निधाभ्यासौ नेदिष्ठं सुसमीपकम्
सुदूरे तु दविष्ठं स्याद् वृत्तं निस्तलवर्तुले। उच्चप्रांशून्नतोदग्रा ध्रुवो नित्यः सनातनः॥
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि। चञ्चलं तरलञ्चैव कठोरं जठरं दृढम् ॥१६॥
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः। एकतानोऽनन्यवृत्तिरुच्चण्डमविलम्बितम्
उच्चावचं नैकभेदं सम्बाधकलिलं तथा। तिमितं स्तिमितं क्लिन्नमभियोगस्त्वभिग्रहः

स्फातिर्वृद्धौ प्रथा ख्यातौ समाहारः समुच्चयः।
अपहारस्त्वपचयो विहारस्तु परिक्रमः ॥ २२ ॥
प्रत्याहार उपादानं निर्हारोऽभ्यवकर्षणम्।
विघ्नोऽन्तरायः प्रत्यूहः स्यादास्यात्वासना स्थितिः ॥ २३ ॥
सन्निधिः सन्निकर्षः स्यात् संक्रमो दुर्गसञ्चरः।
उपलम्भस्त्वनुभवः प्रत्यादेशो निराकृतिः ॥ २४ ॥

परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्। अनुमा पक्षहेत्वाद्यैर्डिम्बे भ्रमरविप्लवौ ॥२५॥

असन्निकृष्टार्थज्ञानं शब्दाद्धि शाब्दमीरितम्।
सादृश्यदर्शनात् तुल्ये बुद्धिः स्यादुपमानकम् ॥ २६ ॥
कार्य्यं दृष्ट्वा विना न स्यादर्थापत्तिः परार्थधीः।

प्रतियोगिन्यऽगृहीते भुवि नातीत्यभावकः। इत्यादिनामलिङ्गो हि हरिरुक्तो नृबुद्धये

इत्यादिमहापुराणेआग्नेयेसामान्यनामलिङ्गादिकथनंनाम
सप्तषष्ट्यधिकत्रिशततमोऽध्यायः।

# अष्टषष्ट्यधिकत्रिशततमोऽध्यायः

## नित्यनैमित्तिकप्राकृतप्रलयाः ।

अग्निरुवाच ।

चतुर्विधस्तु प्रलयो नित्यो यः प्राणिनां लयः ।
सदा विनाशो जातानां ब्राह्मो नैमित्तिको लयः ॥ १ ॥

चतुर्युगसहस्रान्ते प्राकृतः प्राकृतो लयः । लय आत्यन्तिको ज्ञानादात्मनः परमात्मनि
नैमित्तिकस्य कल्पान्ते वक्ष्ये रूपं लयस्य ते । चतुर्युगसहस्रान्ते क्षीणप्राये महीतले ॥
अनावृष्टिरतीवोग्रा जायते शतवार्षिकी । ततः सत्त्वक्षयः स्याच्च ततो विष्णुर्जगत्पतिः
स्थितो जलानि पिबति भानोः सप्तसु रश्मिषु । भूपातालसमुद्रादितोयं नयति संक्षयम्
ततस्तस्यानुभावेन तोयाहारोपबृंहिताः । त एव रश्मयः सप्त जायन्ते सप्त भास्कराः
दहन्त्यऽशेषं त्रैलोक्यं सपातालतलं द्विज ! । कूर्मपृष्ठसमा भूः स्यात् ततः कालाग्निरुद्रकः
शेषाहिश्वाससम्पातात् पातालानि दहत्यधः । पातालेभ्यो भुवं विष्णुर्भुवः स्वर्गं दहत्यतः
अम्बरीषमिवाभाति त्रैलोक्यमखिलं तथा । ततस्तापपरीतास्तु लोकद्वयनिवासिनः
गच्छन्ति ते महर्लोकं महर्लोकाज्जनं ततः । रुद्ररूपी जगद् दग्ध्वा मुखनिश्वासतो हरेः
उत्तिष्ठन्ति ततो मेघा नानारूपाः सविद्युतः । शतं वर्षाणि वर्षन्तः शमयन्त्यग्निमुत्थितम्

सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि शतं मरुत् ।
मुखनिःश्वासतो विष्णोर्नाशं नयति तान् घनान् ॥ १२ ॥

वायुं पीत्वा हरिः शेषे शेते चैकार्णवे प्रभुः । ब्रह्मरूपधरः सिद्धैर्जलगैर्मुनिभिःस्तुतः

आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः ।
आत्मानं वासुदेवाख्यं चिन्तयन् मधुसूदनः ॥ १४ ॥

कल्पं शेते प्रबुद्धोऽथ ब्रह्मरूपी सृजत्यसौ । द्विपरार्धं ततो व्यक्तं प्रकृतौ लीयते द्विज !
स्थानात् स्थानं दशगुणमेकस्माद् गुण्यते स्थले । ततोऽष्टादशमे भागे परार्धमभिधीयते

परार्धं द्विगुणं यत् तु प्राकृतः प्रलयः स्मृतः ।
अनावृष्ट्याऽग्निसम्पर्कात् कृते संज्वलने द्विज ! ॥ १७ ॥
महदादेर्विकारस्य विशेषान्तस्य संक्षये ।कृष्णेच्छाकारिते तस्मिन् सम्प्राप्ते प्रतिसञ्चरे
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धादिकं गुणम् ।
आत्मगन्धात् ततो भूमिः प्रलयत्वाय कल्पते ॥ १९ ॥
रसात्मिकाश्च तिष्ठन्ति ह्यापस्तासां रसो गुणः ।
पीयते ज्योतिषा तासु नष्टास्वग्निश्च दीप्यते ॥ २० ॥
ज्योतिषोऽपि गुणं रूपं वायुर्ग्रसति भास्करम् ।
नष्टे ज्योतिषि वायुश्च बली दोधूयते महान् ॥ २१ ॥
वायोरपि गुणं स्पर्शमाकाशं ग्रसते ततः । वायौ नष्टे तु चाकाशं नीरवं तिष्ठति द्विज !
आकाशस्याथ वै शब्दं भूतादिर्ग्रसते च खम् ।
अभिमानात्मकं खञ्च भूतादिं ग्रसते महान् ॥ २३ ॥
भूमिर्याति लयञ्चाप्सु आपो ज्योतिषि तद् व्रजेत् ।
वायौ वायुश्च खे खञ्च अहङ्कारे लयं स च ॥ २४ ॥
महत्तत्त्वे महान्तश्च प्रकृतिर्ग्रसते द्विज ! ।
व्यक्ताऽव्यक्ता च प्रकृतिर्व्यक्तस्याव्यक्तके लयः ॥ २५ ॥
पुमानेकाक्षरः शुद्धः सोऽप्यंशः परमात्मनः । प्रकृतिः पुरुषश्चैतौ लीयेते परमात्मनि ॥
न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः । सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे

इत्यादिमहापुराणेआग्नेयेनित्यनैमित्तिकप्राकृतप्रलयकथनं नाम
अष्टषष्ट्यधिकत्रिशततमोऽध्यायः ।

————

## ऊनसप्तत्यधिकत्रिशततमोऽध्यायः

### आत्यन्तिकलयगर्भोत्पत्तिनिरूपणम् ।

अग्निरुवाच ।

आत्यन्तिकं लयं वक्ष्ये ज्ञानादात्यन्तिको लयः ।
आध्यात्मिकादिसन्तापं ज्ञात्वा स्वस्य विरागतः ॥ १ ॥
आध्यात्मिकस्तु सन्तापः शारीरो मानसो द्विधा ।
शारीरो बहुभिर्भेदैस्तापोऽसौ श्रूयतां द्विज ! ॥ २ ॥

त्यक्त्वा जीवो भोगदेहं गर्भमाप्नोति कर्मभिः । आतिवाहिकसंज्ञस्तु देहो भवति वै द्विज !

केवलं स मनुष्याणां मृत्युकाल उपस्थिते ।
याम्यैः पुंभिर्मनुष्याणां तच्छरीरं द्विजोत्तमः ! ॥ ४ ॥

नीयते याम्यमार्गेण नान्येषां प्राणिनां मुने ! । ततः स्वर्याति नरकं सभ्रमेद् घटयन्त्रवत् कर्मभूमिरियं ब्रह्मन् ! फलभूमिरसौ स्मृता । यमो योनीश्च नरकं निरूपयति कर्मणा पूरणीयाश्च तेनैव यमश्चैवानुपश्यताम् । वायुभूताः प्राणिनश्च गर्भन्ते प्राप्नुवन्ति हि यमदूतैर्मनुष्यस्तु नीयते तत्र पश्यति । धर्मी च पूज्यते तेन पापिष्ठस्ताड्यते गृहे ॥ शुभाशुभं कर्म तस्य चित्रगुप्तो निरूपयेत् । बान्धवानामशौचे तु देहे खल्वातिवाहिके ॥ तिष्ठन् नयति धर्मज्ञ ! दत्तपिण्याशनं ततः । तं त्यक्त्वा प्रेतदेहन्तु प्राप्यान्यं प्रेतलोकतः वसेत् क्षुधातृषायुक्त आमश्राद्धान्नभुङ्नरः । आतिवाहिकदेहात् तु प्रेतपिण्डैर्विना नरः न हि मोक्षमवाप्नोति पिण्डांस्तत्रैव सोऽश्नुते। कृतेसपिण्डीकरणे नरःसंवत्सरात् परम् प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते । भोगदेहावुभौ प्रोक्तावशुभाशुभसंज्ञितौ ॥ १३ ॥ भुक्त्वा तु भोगदेहेन कर्मबन्धान्निपात्यते । तं देहं परतस्तस्माद् भक्षयन्ति निशाचराः पापे तिष्ठति चेत् स्वर्गं तेन भुक्तं तदा द्विज ! । तदा द्वितीयं गृह्णाति भोगदेहन्तुपापिनाम्

भुक्त्वा पापन्तु वै पश्चाद् येन भुक्तं त्रिपिष्टपम् ।

शुचीनां श्रीमतां गेहे स्वर्गभ्रष्टोऽभिजायते ॥ १६ ॥
पुण्ये तिष्ठति चेत् पापं तेन भुक्तं तदा भवेत् ।
तस्मिन् सम्भक्षिते देहे शुभं गृह्णाति विग्रहम् ॥ १७ ॥

कर्मण्यल्पावशेषे तु नरकादपि मुच्यते । मुक्तस्तु नरकाद् याति तिर्यग्योनिं न संशयः
जीवः प्रविष्टो गर्भन्तु कललेऽप्यत्र तिष्ठति । घनीभूतं द्वितीये तु तृतीयेऽवयवास्ततः

चतुर्थेऽस्थीनि त्वङ्मांसं पञ्चमे रोमसम्भवः ।
षष्ठे चेतोऽथ जीवस्य दुःखं विन्दति सप्तमे ॥ २० ॥

जरायुवेष्टिते देहे मूर्ध्नि बद्धाञ्जलिस्तथा । मध्ये क्लीवस्तु वामे स्त्री दक्षिणे पुरुषस्थितिः
तिष्ठत्युदरभागे तु पृष्ठस्याभिमुखस्तथा । यस्यां तिष्ठत्यसौ योनौ तां स वेत्ति न संशयः
सर्वञ्च वेत्ति वृत्तान्तमारभ्य नरजन्मनः । अन्धकारञ्च महतीं पीड़ां विन्दति मानवः ॥
मातुराहारपीतन्तु सप्तमे मास्युपाश्नुते । अष्टमे नवमे मासि भृशमुद्विजते तथा ॥

व्यवाये पीड़ामाप्नोति मातुर्व्यायामके तथा ।
व्याधिश्च व्याधितायां स्यान्मुहूर्त्तं शतवर्षवत् ॥ २५ ॥
सन्तप्यते कर्मभिस्तु कुरुतेऽथ मनोरथान् ।
गर्भाद् विनिर्गतो ब्रह्मन् ! मोक्षज्ञानं करिष्यति ॥ २६ ॥

सूतिवातैरधोभूतो निःसरेद् योनियन्त्रतः । पीड्यमानो मासमात्रं करस्पर्शेन दुःखितः

खशब्दात् क्षुद्रश्रोतांसि देहे श्रोत्रं विविक्तता ।
श्वासोच्छ्वासौ गतिर्वायोर्वक्रसंस्पर्शनं तथा ॥ २८ ॥
अग्नेरूपं दर्शनं स्यादूष्मा पङ्क्तिश्च पित्तकम् ।
मेधा वर्णं बलं छाया तेजः शौर्य्यं शरीरके ॥ २९ ॥

जलात् स्वेदश्च रसनं देहे वै संप्रजायते । क्लेदो वसा रसा रक्तं शुक्रमूत्रकफादिकम्
भूमेर्घ्राणं केशनखं गौरवं स्थिरतोऽस्थितः । मातृजानि मृदून्यत्र त्वङ्मांसहृदयानि च

नाभिर्मज्जा शकृन्मेदःक्लेदान्यामाशयानि च ।
पितृजानि शिरास्नायुशुक्रञ्चैवात्मजानि तु ॥ ३२ ॥

कामक्रोधौ भयं हर्षो धर्माधर्मात्मता तथा ।
आकृतिः स्वरवर्णौ तु मेहनाद्यं तथा च यत् ॥ ३३ ॥

तामसानि तथाऽज्ञानं प्रमादालस्यतृट्क्षुधाः । मोहमात्सर्य्यवैगुण्यशोकायासभयानि च
कामक्रोधौ तथा शौर्य्यं यज्ञेप्सा बहुभाषिता । अहङ्कारः परावज्ञा राजसानि महामुने !

धर्मेप्सा मोक्षकामित्वं परा भक्तिश्च केशवे ।
दाक्षिण्यं व्यवसायित्वं सात्त्विकानि विनिर्दिशेत् ॥ ३६ ॥

चपलः क्रोधनो भीरुर्बहुभाषी कलिप्रियः । स्वप्ने गगनगश्चैव बहुवातो नरो भवेत् ॥
अकालपलितः क्रोधी महाप्राज्ञो रणप्रियः । स्वप्ने च दीप्तिमत्प्रेक्षी बहुपित्तो नरो भवेत्

स्थिरमित्रः स्थिरोत्साहः स्थिराङ्गो द्रविणान्वितः ।
स्वप्ने जलसितालोकी बहुश्लेष्मा नरो भवेत् ॥ ३९ ॥

रसस्तु प्राणिनां देहे जीवनं रुधिरं तथा । लेपनश्च तथा मांसमेहस्नेहकरन्तु तत् ॥

धारणन्त्वऽस्थि मज्जा स्यात् पूरणं वीर्य्यवर्धनम् ।
शुक्रवीर्य्यकरं ह्योजः प्राणकृज्जीवसंस्थितिः ॥ ४१ ॥

ओजः शुक्रात् सारतरमापीतं हृदयोपगम् । षड्ङ्गसक्थिनी बाहुमूर्धा जठरमीरितम् ॥

षट्त्वचा बाह्यतो यद्वदन्या रुधिरधारिका ।
विलासधारिणी चान्या चतुर्थी कुण्डधारिणी ॥ ४३ ॥
पञ्चमी विद्रधिस्थानं षष्ठी प्राणधरा मता ।
कलासप्तमी मांसधरा द्वितीया रक्तधारिणी ॥ ४४ ॥
यकृत्प्लीहाश्रया त्वान्या मेदोधराऽस्थिधारिणी ।
मज्जाश्लेष्मपुरीषाणां धरा पक्वाशयस्थिता ।
षष्ठी पित्तधरा शुक्रधरा शुक्राशयाऽपरा ॥ ४५ ॥

इत्यादिमहापुराणेआग्नेये आत्यन्तिकलयगर्भोत्पत्तिनिरूपणकथनंनामैको-
नसप्तत्यधिकत्रिशततमोऽध्यायः ।

# सप्तत्यधिकत्रिशततमोऽध्यायः

## शरीरावयवाः ।

अग्निरुवाच ।

श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं धीः खञ्चभूतगम् ।
शब्दस्पर्शरूपरसगन्धाः खादिषु तद्गुणाः ॥ १ ॥
पायूपस्थौ करौ पादौ वाग् भवेत् कर्मखं तथा ।
उत्सर्गानन्दकादानगतिवागादि कर्म तत् ॥ २ ॥
पञ्चकर्मेन्द्रियाण्यत्र पञ्च बुद्धीन्द्रियाणि च । इन्द्रियार्थाश्च पञ्चैव महाभूता मनोऽधिपाः
आत्माऽव्यक्तश्चतुर्विंशतत्वानि पुरुषः परः ।
संयुक्तश्च वियुक्तश्च यथा मत्स्योदके उभे ॥ ४ ॥
अव्यक्तमाश्रितानीह रजःसत्त्वतमांसि च । आन्तरः पुरुषो जीवः स परं ब्रह्म कारणम्
स याति परमं स्थानं यो वेत्ति पुरुषं परम् । सप्ताशयाः स्मृता देहे रुधिरस्यैक आशयः
श्लेष्मणश्चामपित्ताभ्यां पक्वाशयस्तु पञ्चमः
वायुमूत्राशयः सप्त स्त्रीणां गर्भाशयोऽष्टमः ॥ ७ ॥
पित्तात् पक्वाशयोऽग्नेः स्याद् योनिर्विकशिता द्युतौ ।
पद्मवत् गर्भाशयः स्यात् तत्र धत्ते सरक्तकम् ॥ ८ ॥
शुक्रं स्वशुक्रतश्चाङ्गं कुन्तलान्यत्र कालतः । न्यस्तं शुक्रमतो योनौ नेति गर्भाशयं मुने !
ऋतावपि च योनिश्चेद् वातपित्तकफावृता ।
भवेत् तदा विकाशित्वं नैव तस्यां प्रजायते ॥ १० ॥
वुक्कात् पुक्कसकप्लीहकृतकोष्ठाङ्गहृद् व्रणाः । तण्डकश्च महाभाग ! निबद्धान्याशये मतः
रसस्य पच्यमानस्य साराद् भवति देहिनाम् ।
प्लीहा यकृच्च धर्मज्ञ ! रक्तफेनाच्च पुक्कसः ॥ १२ ॥

रक्तं पित्तञ्च भवति तथा तण्डकसंज्ञकः । मेदोरक्तप्रसाराच्च वुक्कायाः सम्भवः स्मृतः

रक्तमांसप्रसाराच्च भवन्त्यन्त्राणि देहिनाम् ।
सार्धत्रिव्यामसंख्यानि तानि नृणां विनिर्दिशेत् ॥ १४ ॥
त्रिव्यामानि तथा स्त्रीणां प्राहुर्वेदविदो जनाः ।
रक्तवायुसमायोगात् कामे यस्योद्भवः स्मृतः ॥ १५ ॥

कफप्रसाराद् भवति हृदयं पद्मसन्निभम् । अधोमुखं तच्छुषिरं यत्र जीवो व्यवस्थितः

चैतन्यानुगता भावाः सर्वे तत्र व्यवस्थिताः ।
तस्य वामे तथा प्लीहा दक्षिणे च तथा यकृत् ॥ १७ ॥
दक्षिणे च तथा क्लोम पद्मस्यैवं प्रकीर्त्तितम् ।
श्रोतांसि यानि देहेऽस्मिन् कफरक्तवहानि च ॥ १८ ॥

तेषां भूतानुमानाच्च भवतीन्द्रियसम्भवः । नेत्रयोर्मण्डलं शुक्लं कफाद् भवति पैतृकम्

कृष्णञ्च मण्डलं वातात् तथा भवति मातृकम् ।
पित्तात् त्वङ्मण्डलं ज्ञेयं मातापितृसमुद्भवम् ॥ २० ॥
मांसासृक्कफजा जिह्वा मेदोऽसृक्कफमांसजौ ।
वृषणौ दश प्राणस्य ज्ञेयान्यायतनानि तु ॥ २१ ॥
मूर्द्धा हृन्नाभिकण्ठाश्च जिह्वा शुक्रञ्च शोणितम् ।
गुदं वस्तिश्च गुल्फश्च कण्डुराः षोड़शेरिताः ॥ २२ ॥

द्वे करे द्वे च चरणे चतस्रः पृष्ठतो गले । देहे पादादिशीर्षान्ते जालानि चैव षोड़श ॥

मांसस्नायुशिरास्थिन्यः चत्वारश्च पृथक् पृथक् ।
मणिबन्धनगुल्फेषु निबद्धानि परस्परम् ॥ २४ ॥
षट्कूर्चानि स्मृतानीह हस्तयोः पादयोः पृथक् ।
ग्रीवायाञ्च तथा मेढ्रे कथितानि मनीषिभिः ॥ २५ ॥

पृष्ठवंशस्योपगताश्चतस्रो मांसरज्जवः । नवत्यश्च तथा पेश्यस्तासां बन्धनकारिकाः ॥
सीरण्यश्च तथा सप्त पञ्च मूर्द्धानमाश्रिताः । एकैका मेढ्रजिह्वास्ता अस्थि षष्टिशतत्रयम्

सूक्ष्मैः सह चतुःषष्टिर्दशना विंशतिर्नखाः । पाणिपादशलाकाश्च तासां स्थानचतुष्टयम्

षष्ट्यङ्गुलीनां द्वे पाण्योर्गुल्फेषु च चतुष्टयम् ।

चत्वार्य्यरत्न्योरस्थीनि जङ्घयोस्तद्वदेव तु ॥ २६ ॥

द्वे द्वे जानुकपोलोरु फलकांशसमुद्भवम् । अक्षस्थानांशकश्रोणिफलके चैवमादिशेत् ॥

भगास्तोकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ।

ग्रीवायाञ्च तथाऽस्थीनि जत्रुकञ्च तथा हनुः ॥ ३१ ॥

तन्मूलं द्वे ललाटाक्षिगण्डनासाङ्घ्र्यवस्थिताः ।

पर्शुकास्तालुकैः सार्द्धमर्बुदैश्च द्विसप्ततिः ॥ ३२ ॥

द्वे शङ्खके कपालानि चत्वार्येव शिरस्तथा । उरः सप्तदशास्थीनि सन्धीनां द्वे शते दश

अष्टषष्टिस्तु शाखासु षष्टिश्चैकविवर्जिता । अन्तरा वै त्र्यशीतिश्च स्नायोर्नवशतानि च

त्रिंशाधिके द्वे शते तु अन्तराधौ तु सप्ततिः ।

ऊर्ध्वगाः षट्शतान्येव शाखास्तु कथितानि तु ॥ ३५ ॥

पञ्चपेशीशतान्येव चत्वारिंशत् तथोर्ध्वगाः । चतुःशतन्तु शाखासु अन्तराधौ च षष्टिका

स्त्रीणां चैकाधिका वै स्याद् विंशतिश्चतुरुत्तरा ।

स्तनयोर्दश योनौ च त्रयोदश तथाशये ॥ ३७ ॥

गर्भस्य च चतस्रः स्युः शिराणाञ्च शरीरिणाम् ।

त्रिंशच्छतसहस्राणि तथान्यानि नवैव तु ॥ ३८ ॥

षट्पञ्चाशत्सहस्राणि रसं देहे वहन्ति ताः ।

केदार इव कुल्याश्च क्लेदलेपादिकञ्च यत् ॥ ३९ ॥

द्वासप्ततिस्तथा कोष्ठो व्योम्नामिह महामुने ! ।

मज्जाया मेदसश्चैव वसायाश्च तथा द्विज ! ॥ ४० ॥

मूत्रस्य चैव पित्तस्य श्लेष्मणः शकृतस्तथा । रक्तस्य सरसस्यात्र क्रमशोऽञ्जलयो मता

अर्धार्धाभ्यधिकाः सर्वाः पूर्वपूर्वाऽञ्जलेर्मताः । अर्धाञ्जलिश्च शुक्रस्य तदर्धञ्च तथौजसः

रजसस्तु तथा स्त्रीणाञ्चतस्रः कथिता बुधैः ।

शरीरं मलदोषादि पिण्डं ज्ञात्वाऽऽत्मनि त्यजेत् ॥ ४३ ॥

इत्याग्निमहापुराणेआग्नेयेशरीरावयवकथनंनामसप्तत्यधिकत्रिशततमोऽध्याय ।

---

# एकसप्तत्यधिकत्रिशततमोऽध्यायः

## नरकनिरूपणम् ।

अग्निरुवाच ।

उक्तानि यममार्गाणि वक्ष्येऽथ मरणे नृणाम् । ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः

शरीरमुपरुध्याऽथ कृत्स्नान् दोषान् रुणद्धि वै ।

छिनत्ति प्राणस्थानानि पुनर्मर्माणि चैव हि ॥ २ ॥

शैत्याद् प्रकुपितो वायुश्छिद्रमन्विष्यते ततः ।

द्वे नेत्रे द्वौ तथा कर्णौ द्वौ तु नासापुटौ तथा ॥ ३ ॥

ऊर्ध्वन्तु सप्त छिद्राणि अष्टमं वदनं तथा । एतैः प्राणो विनिर्याति प्रायशः शुभकर्मणाम्

अधः पायुरुपस्थश्च अनेनाशुभकारिणाम् ।

मूर्धानं योगिनो भित्त्वा जीवो यात्यथ चेच्छया ॥ ५ ॥

अन्तकाले तु सम्प्राप्ते प्राणेऽपानमुपस्थिते । तमसा संवृते ज्ञाने संवृतेषु च मर्मसु ॥

स जीवो नाभ्यधिष्ठानाच्चाल्यते मातरिश्वना ।

बाध्यमानश्चानयते अष्टाङ्गाः प्राणवृत्तिकाः ॥ ७ ॥

च्यवन्तं जायमानं वा प्रविशन्तञ्च योनिषु । प्रपश्यन्ति च तं सिद्धा देवादिव्येन चक्षुषा

गृह्णाति तत्क्षणाद् योगे शरीरञ्चातिवाहिकम् । आकाशवायुतेजांसि विग्रहादूर्ध्वगामिनः

जलं मही च पञ्चत्वमापन्नः पुरुषः स्मृतः । आतिवाहिकदेहन्तु यमदूता नयन्ति तम् ॥

याम्यं मार्गं महाघोरं षड्शीतिसहस्रकम् । अन्नोदकं नीयमानो बान्धवैर्दत्तमश्नुते ॥

यमं दृष्ट्वा यमोक्तेन चित्रगुप्तेन चेरितान् ।

प्राप्नोति नरकान् रौद्रान् धर्मी शुभपथैर्दिवम् ॥ १२ ॥

भुज्यन्ते पापिभिर्वक्ष्ये नरकांस्ताश्च यातनाः । अष्टाविंशतिरेवाधःक्षितेर्नरककोटयः ॥

सप्तमस्य तलस्यान्ते घोरे तमसि संस्थिताः ।

घोराख्या प्रथमा कोटिः सुघोरा तदधःस्थिताः ॥ १४ ॥

अतिघोरा महाघोरा घोररूपा च पञ्चमी । षष्ठी तरलताराख्या सप्तमी च भयानका ॥

भयोत्कटा कालरात्री महाचण्डा च चण्डया ।

कोलाहला प्रचण्डाख्या पद्मा नरकनायिका ॥ १६ ॥

पद्मावती भीषणा च भीमा चैव करालिका ।

विकराला महावज्रा त्रिकोणा पञ्चकोणिका ॥ १७ ॥

सुदीर्घा वर्तुला सप्तभूमा चैव सुभूमिका। दीप्तमायाऽष्टाविंशति कोटयः पापिदुःखदाः

अष्टाविंशतिकोटीनां पञ्च पञ्च च नायकाः । रौरवाद्याः शतञ्चैकं चत्वारिंशच्चतुष्टयम्

तामिश्रमन्धतामिश्रं महारौरवरौरवौ । असिपत्रं वनञ्चैव लोहभारं तथैव च ॥ २० ॥

नरकं कालसूत्रञ्च महानरकमेव च । सञ्जीवनं महावीचि तपनं सम्प्रतापनम् ॥ २१ ॥

सङ्घातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम् । लोहशङ्कुमृजीषञ्च प्रधानं शाल्मलीं नदीम्

नरकान् विद्धि कोटीशनागान् वै घोरदर्शनान् ।

पात्यन्ते पापकर्माण एकैकस्मिन् बहुष्वपि ॥ २३ ॥

मार्जारोलूकगोमायुगृध्रादिवदनाश्च ते । तैलद्रोण्यां नरं क्षिप्त्वा ज्वालयन्ति हुताशनम्

अम्बरीषेषु चैवान्यांस्ताम्रपात्रेषु चापरान् । अयःपात्रेषु चैवान्यान् बहुवह्निकणेषु च ॥

शूलाग्रारोपिताश्चान्ये छिद्यन्ते नरकेऽपरे ।

ताड्यन्ते च कशाभिस्तु भोज्यन्ते चाप्ययोगुडान् ॥ २६ ॥

यमदूतैर्नराः पांशून् विष्ठारक्तकफादिकान् । तप्तं मद्यं पाययन्ति पाटयन्ति पुनर्नरान्

यन्त्रेषु पीडयन्ति स्म भक्ष्यन्ते वायसादिभिः ।

तैलेनोष्णेन सिच्यन्ते छिद्यन्ते नैकधा शिरः ॥ २८ ॥

हा तातेति क्रन्दमानाः स्वकं निन्दन्ति कर्म ते ।

—४६

महापातकजान् घोरान् नरकान् प्राप्य गर्हितान् ॥ २६ ॥

कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह। मृगाश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति
खरपुक्कशम्लेच्छानां मद्यपः स्वर्णहार्य्यपि। कृमिकीटपतङ्गत्वं गुरुगस्तृणगुल्मताम् ॥

ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः।
स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥ ३२ ॥
यो येन संस्पृशत्येषां स तल्लिङ्गोऽभिजायते।
अन्नहर्त्ता मायावी स्यान्मूको वागपहारकः ॥ ३३ ॥
धान्यं हृत्वाऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः।
तैलहृत् तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः ॥ ३४ ॥

परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च। अरण्ये निर्जने देशे जायते ब्रह्मराक्षसः ॥

रत्नहारी हीनजातिर्गन्धान् छुछुन्दरी शुभान्।
पत्रं शाकं शिखी हृत्वा मुखरो धान्यहारकः ॥ ३६ ॥
अजः पशुं पयः काको यानमुष्ट्रः फलं कपिः।
मधु दंशः फलं गृध्रो गृहकाक उपस्करम् ॥ ३७ ॥
श्वित्री वस्त्रं सारसश्च झिल्ली लवणहारकः।
उक्त आध्यात्मिकस्तापः शस्त्राद्यैराधिभौतिकः ॥ ३८ ॥

ग्रहाग्निदेवपीडाद्यैराधिदैविक ईरितः। त्रिधा तापं हि संसारं ज्ञानयोगाद् विनाशयेत्

कृच्छ्रैर्व्रतैश्च दानाद्यैर्विष्णुपूजादिभिर्नरः ॥ ३९ ॥

इत्यादिमहापुराणेआग्नेये नरकनिरूपणकथनं नामैकसप्तत्यधिकत्रिशततमोऽध्यायः।

---

# द्विसप्तत्यधिकत्रिशततमोऽध्यायः

## यमनियमाः ।

### अग्निरुवाच ।

संसारतापमुक्त्यर्थं वक्ष्याम्यष्टाङ्गयोगकम् । ब्रह्मप्रकाशकं ज्ञानं योगस्तत्रैकचित्तता
चित्तवृत्तिनिरोधश्च जीवब्रह्मात्मनोः परः । अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ॥

यमाः पञ्च स्मृता विप्र ! नियमाद् भुक्तिमुक्तिदाः ।
शौच सन्तोषतपसी स्वाध्यायेश्वरपूजने ॥ ३ ॥
भूतापीड़ा ह्यहिंसा स्यादहिंसा धर्म उत्तमः ।
यथा गजपदेऽन्यानि पदानि पथगामिनाम् ॥ ४ ॥

एवं सर्वमहिंसायां धर्मार्थमभिधीयते । उद्वेगजननं हिंसा सन्तापकरणं तथा ॥ ५ ॥
रुक्कृतिः शोणितकृतिः पैशुन्यकरणं तथा । हितस्यातिनिषेधश्च मर्मोद्घाटनमेव च ॥

सुखापह्नुतिः संरोधो वधो दशविधा च सा ।
यद्भूतहितमत्यन्तं वचः सत्यस्य लक्षणम् ॥ ७ ॥
सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ८ ॥

मैथुनस्य परित्यागो ब्रह्मचर्य्यं तदष्टधा । स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥
ब्रह्मचर्य्यं क्रियामूलमन्यथा विफला क्रिया । वशिष्ठश्चन्द्रमाः शुक्रो देवाचार्य्यःपितामहः

तपोवृद्धा वयोवृद्धास्तेऽपि स्त्रीभिर्विमोहिताः ।
गौड़ी पैष्टी च माध्वी च विज्ञेयास्त्रिविधाः सुराः ॥ १२ ॥
चतुर्थी स्त्री सुराज्ञेया ययेदं मोहितं जगत् ।
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा तु माद्यति ॥ १३ ॥

यस्माद् दृष्टमदा नारी तस्मात् तान्नावलोकयेत् ।
यद् वा तद् वाऽपरद्रव्यमपहृत्य बलान्नरः ॥ १४ ॥
अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः ।
कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम् ॥ १५ ॥
पादुके चापि गृह्णीयात् कुर्य्यान्नान्यस्य संग्रहम् ।
देहस्थितिनिमित्तस्य वस्त्रादेः स्यात् परिग्रहः ॥ १६ ॥
शरीरं धर्मसंयुक्तं रक्षणीयं प्रयत्नतः । शौचन्तु द्विविधं प्रोक्तं बाह्यमभ्यन्तरं तथा ॥
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धे रथान्तरम् ।
उभयेन शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥ १८ ॥
यथा कथञ्चित् प्राप्त्या च सन्तोषस्तुष्टिरुच्यते ।
मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं तप उच्यते ॥ १९ ॥
तज्जयः सर्वधर्मेभ्यः स धर्मः पर उच्यते । वाचिकं मन्त्रजप्यादि मानसं रागवर्जनम्
शारीरं देवपूजादि सर्वदन्तु त्रिधा तपः । प्रणवाद्यास्ततो वेदाः प्रणवे पर्य्यवस्थिताः॥
वाङ्मयः प्रणवः सर्वं तस्मात् प्रणवमभ्यसेत् ।
अकारश्च तथोकारो मकारश्चार्द्धमात्रया ॥ २२ ॥
तिस्रो मात्रास्त्रयो वेदाः लोका भूराद्यो गुणा ।
जाग्रत् स्वप्नः सुषुप्तिश्च ब्रह्मविष्णुमहेश्वराः ॥ २३ ॥
प्रद्युम्नः श्रीवासुदेवः सर्वमोङ्कारकः क्रमात् । अमात्रो नष्टमात्रश्च द्वैतस्यापगमः शिवः
ओङ्कारो विदितो येन स मुनिर्नेतरो मुनिः ।
चतुर्थी मात्रा गान्धारी प्रयुक्ता मूर्ध्नि लक्ष्यते ॥ २५ ॥
तत् तुरीयं परं ब्रह्म ज्योतिर्दीपो घटे यथा । तथा हृत्पद्मनिलयं ध्यायेन्नित्यं जपेन्नरः
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्
एतदेकाक्षरं ब्रह्म एतदेकाक्षरं परम् । एतदेकाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥
छन्दोऽस्य देवी गायत्री अन्तर्य्यामी ऋषिः स्मृतः ।

देवता परमात्माऽस्य नियोगो भुक्तमुक्तये ॥ २६ ॥

भूरग्न्यात्मने हृदयं भुवः प्राजापत्यात्मने। शिरः स्वः सूर्य्यात्मने च शिखाकवचमुच्यते

ओं भूर्भुवः स्वः कवचं सत्यात्मने ततोऽस्त्रकम् ।

विन्यस्य पूजयेद् विष्णुं जपेद् वै भुक्तिमुक्तये ॥ ३१ ॥

जुहुयाच्च तिलाज्यादि सर्वं सम्पद्यते नरे । यस्तु द्वादशसाहस्रं जपमन्वहमाचरेत् ॥

तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ।

अणिमादि कोटिजप्याल्लक्षात् सारस्वतादिकम् ॥ ३३ ॥

वैदिकस्तान्त्रिको मिश्रो विष्णोर्वै त्रिविधो मखः ।

त्रयाणामीप्सितेनैकविधिना हरिमर्चयेत् ॥ ३४ ॥

प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत् ।

स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥ ३५ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः

इत्यादिमहापुराणे आग्नेये यमनियमकथनं नामद्विसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

## त्रिसप्तत्यधिकत्रिशततमोऽध्यायः

### आसनप्राणायामप्रत्याहाराः ।

अग्निरुवाच ।

आसनं कमलाद्युक्तं तद् बध्वा चिन्तयेत् परम् ।

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥ १ ॥

नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् । तत्रैकाग्रं मनःकृत्वा यतचित्तेन्द्रियक्रियः

उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये । समकायशिरग्रीवं धारयन्नचलं स्थिरः

सम्प्रेक्ष्य नासिकाग्रं स्वन्दिशश्चानवलोकयन् ।

पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः ॥ ४ ॥

ऊरुभ्यामुपरिस्थाप्य बाहू तिर्यक् प्रयत्नतः । दक्षिणं करपृष्ठञ्च न्यसेद् वामतलोपरि

उन्नम्य शनकैर्वक्त्रं मुखं विष्टभ्य चाग्रतः ।

प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् ॥ ६ ॥

नासिकापुटमङ्गुल्या पीड्यैव च परेण च । औदरं रेचयेद् वायुं रेचनाद्रेचकः स्मृतः ॥

वाह्येन वायुना देहं दृतिवत् पूरयेद् यथा । तथा पूर्णश्चसन्तिष्ठेत् पूरणात् पूरकः स्मृतः

न मुञ्चति न गृह्णाति वायुमन्तर्वहिः स्थितम् ।

सम्पूर्णकुम्भवत् तिष्ठेदचलः स तु कुम्भकः ॥ ६ ॥

कन्यकः सकृदुद्घातः स वै द्वादशमात्रिकः । मध्यमश्च द्विरुद्घातश्चतुर्विंशतिमात्रिकः

उत्तमश्च त्रिरुद्घातः षट्त्रिंशत्तालमात्रिकः । स्वेदकम्पाभिघातानां जननश्चोत्तमोत्तमः

अजितान्नारुहेद् भूमिं हिक्काश्वासादयस्तथा ।

जिते प्राणे स्वल्पदोषविण्मूत्रादि प्रजायते ॥ १२ ॥

आरोग्यं शीघ्रगामित्वमुत्साहः स्वरसौष्ठवम् । बलवर्णप्रसादश्च सर्वदोषक्षयः फलम्

जपध्यानं विनागर्भः स गर्भस्तत् समन्वितः ।

इन्द्रियाणां जयार्थाय सगर्भं धारयेत् परम् ॥ १४ ॥

ज्ञानवैराग्ययुक्ताभ्यां प्राणायामवशेन च ।

इन्द्रियांश्च विनिर्जित्य सर्वमेव जितं भवेत् ॥ १५ ॥

इन्द्रियाण्येव तत्सर्वं यत् स्वर्गनरकावुभौ । निग्रहीतविसृष्टानि स्वर्गाय नरकाय च ॥

शरीरं रथमित्याहुरिन्द्रियाण्यस्य वाजिनः ।

मनश्च सारथिः प्रोक्तः प्राणायामः कशः स्मृतः ॥ १७ ॥

ज्ञानवैराग्यरश्मिभ्यां मायया विधृतं मनः । शनैर्निश्चलतामेति प्राणायामैकसंहितम् ॥

जलबिन्दुं कुशाग्रेण मासे मासे पिबेत् तु यः ।

संवत्सरशतं साग्रं प्राणायामश्च तत्समः ॥ १६ ॥

इन्द्रियाणि प्रसक्तानि प्रविश्य विषयोदधौ ।

आहृत्य यो निगृह्णाति प्रत्याहारः स उच्यते ॥ २० ॥
उद्धरेदात्मनात्मानं मज्जमानं यथाम्भसि । भोगनद्यतिवेगेन ज्ञानवृक्षं समाश्रयेत् ॥
इत्याग्नेये महापुराणे आसनप्राणायामप्रत्याहारकथनं नाम
त्रिसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

# चतुःसप्तत्यधिकत्रिशततमोऽध्यायः

## ध्यानम् ।

अग्निरुवाच ।

ध्यै चिन्तायां स्मृतो धातुर्विष्णुचिन्ता मुहुर्मुहुः ।
अनाक्षिप्तेन मनसा ध्यानमित्यभिधीयते ॥ १ ॥
आत्मनः समनस्कस्य मुक्ताशेषोपधस्य च । ब्रह्मचिन्तासमा शक्तिर्ध्यानं नाम तदुच्यते
ध्येयालम्बनसंस्थस्य सदृशप्रत्ययस्य च । प्रत्ययान्तरनिर्मुक्तः प्रत्ययो ध्यानमुच्यते
ध्येयावस्थितचित्तस्य प्रदेशे यत्र कुत्रचित् । ध्यानमेतत् समुद्दिष्टं प्रत्ययस्यैकभावना
एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत् । कुलं स्वजनमित्राणि समुद्धृत्य हरिर्भवेत्
एवं मुहूर्त्तमर्धं वा ध्यायेद् यः श्रद्धया हरिम् । सोऽपि तां गतिमाप्नोति न तां सर्वैर्महामखैः
ध्याता ध्यानं तथा धेयं यच्च ध्यानप्रयोजनम् । एतच्चतुष्टयं ज्ञात्वा योगं युञ्जीत तत्त्ववित्
योगाभ्यासाद् भवेन्मुक्तिरैश्वर्य्यञ्चाष्टधा महत् । ज्ञानवैराग्यसम्पन्नः श्रद्दधानः क्षमान्वितः
विष्णुभक्तः सदोत्साही ध्यात्वेत्थं पुरुषः स्मृतः । मूर्तामूर्तं परं ब्रह्म हरेर्ध्यानं हि चिन्तनम्
सकलो निष्कलो ज्ञेयः सर्वज्ञः परमो हरिः । अणिमादिगुणैश्वर्य्यं मुक्तिर्ध्यानप्रयोजनम्
फलेन योजको विष्णुरतो ध्यायेत् परेश्वरम् ।
गच्छंस्तिष्ठन् स्वपन् जाग्रदुन्मिषन् निमिषन्नपि ॥ ११ ॥
शुचिर्वाऽप्यशुचिर्वापि ध्यायेत् सततमीश्वरम् ।

स्वदेहायतनस्यान्ते मनसि स्थाप्य केशवम् ॥ १२ ॥

हृत्पद्मपीठिकामध्ये ध्यानयोगेन पूजयेत् । ध्यानयज्ञः परः शुद्धः सर्वदोषविवर्जितः ॥

तेनेष्ट्वा मुक्तिमाप्नोति बाह्यशुद्धैश्च नाध्वरैः ।

हिंसादोषविमुक्तित्वाद् विशुद्धिश्चित्तसाधनः ॥ १४ ॥

ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः । तस्मादशुद्धं सन्त्यज्य ह्यनित्यं बाह्यसाधनम् ॥

यज्ञाद्यं कर्म सन्त्यज्य योगमत्यर्थमभ्यसेत् ।

विकारमुक्तमव्यक्तं भोग्यभोगसमन्वितम् ॥ १६ ॥

चिन्तयेद्धृदये पूर्वं क्रमादादौ गुणत्रयम् । तमः प्रच्छाद्य रजसा सत्त्वेन छादयेद्रजः ॥

ध्यायेत् त्रिमण्डलं पूर्वं कृष्णं रक्तं सितं क्रमात् ।

सत्त्वोपाधिगुणातीतः पुरुषः पञ्चविंशकः ॥ १८ ॥

ध्येयमेतदशुद्धञ्च त्यक्त्वा शुद्धं विचिन्तयेत् । ऐश्वर्यं पङ्कजं दिव्यं पुरुषोपरि संस्थितम्

द्वादशाङ्गुलविस्तीर्णं शुद्धं विकसितं सितम् ।

नालमष्टाङ्गुलं तस्य नाभिकन्दसमुद्भवम् ॥ २० ॥

पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् । कर्णिकाकेशरं नालं ज्ञानवैराग्यमुत्तमम् ॥

विष्णुधर्मश्च तत्कन्दमिति पद्मं विचिन्तयेत् । तद्धर्मज्ञानवैराग्यं शिवैश्वर्य्यमयं परम् ॥

ज्ञात्वा पद्मासनं सर्वं सर्वदुःखान्तमाप्नुयात् । तत्पद्मकर्णिकामध्ये शुद्धदीपशिखाकृतिम्

अङ्गुष्ठमात्रममलं ध्यायेदोङ्कारमीश्वरम् । कदम्बगोलकाकारं तारं रूपमिव स्थितम् ॥

ध्यायेद् वा रश्मिजालेन दीप्यमानं समन्ततः ।

प्रधानं पुरुषातीतं स्थितं पद्मस्थमीश्वरम् ॥ २५ ॥

ध्यायेज्जपेच्च सततमोङ्कारं परमक्षरम् । मनःस्थित्यर्थमिच्छन्ति स्थूलध्यानमनुक्रमात्

तद्भूतं निश्चलीभूतं लभेत् सूक्ष्मेऽपि संस्थितम् ।

नाभिकन्दे स्थितं नालं दशाङ्गुलसमायतम् ॥ २७ ॥

नालेनाष्टदलं पद्मं द्वादशाङ्गुलविस्तृतम् । सकर्णिके केसराले सूर्य्यसोमाग्निमण्डलम्

अग्निमण्डलमध्यस्थः शङ्खचक्रगदाधरः । पद्मी चतुर्भुजो विष्णुरथ वाष्टभुजो हरिः ॥

शार्ङ्गाक्षवलयधरः पाशाङ्कुशधरः परः । स्वर्णवर्णः श्वेतवर्णः सश्रीवत्सः सकौस्तुभः
वनमाली स्वर्णहारी स्फुरन्मकरकुण्डलः । रत्नोज्ज्वलकिरीटश्च पीताम्बरधरो महान्
सर्वाभरणभूषाढ्यो वितस्तिर्वा यथेच्छया ।
अहं ब्रह्म ज्योतिरात्मा वासुदेवो विमुक्त ओम् ॥ ३२ ॥
ध्यानाच्छ्रान्तो जपेन् मन्त्रं जपाच्छ्रान्तश्च चिन्तयेत् ।
जापध्यानादियुक्तस्य विष्णुः शीघ्रं प्रसीदति ॥ ३३ ॥
जपयज्ञस्य वै यज्ञाः कलां नार्हन्ति षोडशीम् । जपिनं नोपसर्पन्ति व्याधयश्चाधयोग्रहाः
भक्तिर्मुक्तिर्मृत्युजयो जपेन प्राप्नुयात् फलम् ॥ ३४ ॥
इत्यादिमहापुराणेआग्नेयेध्यानयोगकथनंनामचतुःसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

# पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः

## धारणा ।

अग्निरुवाच ।

धारणा मनसो ध्येये संस्थितिर्ध्यानवद् द्विधा । मूर्त्तामूर्त्तहरिध्यानमनोधारणतो हरिः
यद् बाह्यावस्थित लक्ष्यं तस्मान्न चलते मनः ।
तावत् कालं प्रदेशेषु धारणा मनसि स्थितिः ॥ २ ॥
कालावधि परिच्छिन्नं देवे संस्थापितं मनः ।
न प्रच्यवति यल्लक्ष्याद् धारणा साऽभिधीयते ॥ ३ ॥
धारणा द्वादशायामा ध्यानं द्वादशधारणाः । ध्यानं द्वादशकंयावत् समाधिरभिधीयते
धारणाभ्यासयुक्तात्मा यदि प्राणैर्विमुच्यते । कुलैकविंशमुत्तार्य्य स्वर्याति परमं पदम्
यस्मिन् यस्मिन् भवेदङ्गे योगिनां व्याधिसम्भवः ।
तत् तदङ्गं धिया व्याप्य धारयेत् तत्त्वधारणम् ॥ ६ ॥

आग्नेयी वारुणी चैव ऐशानी चामृतात्मिका ।
साग्निः शिखा फडन्ता च विष्णोः कार्य्या द्विजोत्तम ! ॥ ७ ॥
नाड़ीभिर्विकटं दिव्यं शूलाग्रं वेधयेच्छुभम् ।
पादाङ्गुष्ठात् कपालान्तं रश्मिमण्डलमावृतम् ॥ ८ ॥
तिर्य्यक्चाधोर्ध्व भागेभ्यः प्रयान्त्योऽतीव तेजसा ।
चिन्तयेत् साधकेन्द्रस्तं यावत् सर्वं महामुने ! ॥ ९ ॥

भस्मीभूतं शरीरं स्वन्ततश्चैवोपसंहरेत् । शीतश्लेष्मादयः पापं विनश्यन्ति द्विजातयः

शिरो धीरञ्च कारञ्च कण्ठं चाधोमुखे स्मरेत् ।
ध्यायेदच्छिन्नचित्तात्मा भूयो भूतेन चात्मना ॥ ११ ॥

स्फुरच्छीकरसंस्पर्शप्रभूते हिमगामिभिः । धाराभिरखिलं विश्वमापूर्य्य भुवि चिन्तयेत्

ब्रह्मरन्ध्राच्च संक्षोभाद् यावदाधारमण्डलम् ।
सुषुम्नान्तर्गतो भूत्वा संपूर्णेन्दुकृतालयम् ॥ १३ ॥

संप्लाव्य हिमसंस्पर्शतोयेनामृतमूर्त्तिना । क्षुत् पिपासाक्रमप्रायःसन्तापपरिर्पाड़ितः ॥

धारयेद् वारुणीं मन्त्री तुष्ट्यर्थं चाप्यतन्त्रितः ।
वारुणीधारणा प्रोक्ता ऐशानीधारणां शृणु ॥ १५ ॥
व्योम्नि ब्रह्ममये पद्मे प्राणाप्राणे क्षयं गते ।
प्रसादं चिन्तयेद् विष्णोर्यावच्चिन्ताक्षयं गता ॥ १६ ॥

महाभावं जपेत् सर्वं ततो व्यापक ईश्वरः । अर्द्धेन्दुं परमं शान्तं निराभासं निरञ्जनम्
असत्यं सत्यमाभाति तावत् सर्वं चराचरम् । यावत् स्वच्छन्दरूपन्तु न दृष्टं गुरुवक्त्रतः
दृष्टे तस्मिन् परे तत्त्वे आब्रह्मसचराचरम् । प्रमातृमानमेयञ्च ध्यानहृत्पद्मकम्पनम् ॥
मातृमोदकवत् सर्वं जपहोमार्चनादिकम् । विष्णुमन्त्रेण वा कुर्य्यादमृतां धारणां वदे

सम्पूर्णेन्दुनिभं ध्यायेत् कमलं तन्त्रिमुद्गिगम् ।
शिरःस्थं चिन्तयेद् यत्नाच्छशाङ्कयुतवर्चसम् ॥ २१ ॥
सम्पूर्णमण्डलं व्योम्नि शिवकल्लोलपूर्णितम् ।

तथा हृत् कमले ध्यायेत् तन्मध्ये स्वतनुं स्मरेत् ।
साधको विगतक्लेशो जायते धारणादिभिः ॥ २२ ॥
इत्यादिमहापुराणे आग्नेये धारणाकथनं नाम पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

# षट्सप्तत्यधिकत्रिशततमोऽध्यायः

## समाधिः ।

अग्निरुवाच ।

यदात्मकं निर्भासं स्तिमितो दधिवत् स्थितम् ।
चैतन्यरूपवद् ध्यानं तत् समाधिरिहोच्यते ॥ १ ॥
ध्यायन् मनः सन्निवेश्य यस्तिष्ठेदचलःस्थिरः ।
निर्वातानलवद् योगी समाधिस्थः प्रकीर्त्तितः ॥ २ ॥
न शृणोति न चाघ्राति न पश्यति नवम्यति । न च स्पर्शं विजानाति नसङ्कल्पयतेमनः
न चाभिमन्यते किञ्चिन्न च बुध्यति काष्ठवत् ।
एवमीश्वरसंलीनः समाधिस्थः स गीयते ॥ ४ ॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
ध्यायतो विष्णुमात्मानं समाधिस्तस्य योगिनः ॥ ५ ॥
उपसर्गाः प्रवर्त्तन्ते दिव्याः सिद्धिप्रसूचकाः । पातितः श्रावणो धातुर्दर्शनस्वाङ्गवेदनाः
प्रार्थयन्ति च तं देवा भोगैर्दिव्यैश्च योगिनम् । नृपाश्च पृथिवीदानैधनैश्च सुधनाधिपाः
वेदादिसर्वशास्त्रञ्च स्वयमेव प्रवर्त्तते । अभीष्टच्छन्दोविषयं काव्यञ्चास्य प्रवर्त्तते ॥
रसायनानि दिव्यानि दिव्याश्चौषधयस्तथा ।
समस्तानि च शिल्पानि कलाः सर्वाश्च विन्दति ॥ ६ ॥
सुरेन्द्रकन्या इत्याद्या गुणाश्च प्रतिभादयः ।

तृणवत् तान्त्यजेद् यस्तु तस्य विष्णुः प्रसीदति ॥ १० ॥
अणिमादिगुणैश्वर्य्यः शिष्ये ज्ञानं प्रकाश्य च ।
भुक्त्वा भोगान् यथेच्छातस्तनुन्त्यक्त्वालयात् ततः ॥ ११ ॥
तिष्ठेत् स्वात्मनि विज्ञान आनन्दे ब्रह्मणीश्वरे ।
मलिनो हि यथादर्श आत्मज्ञानाय न क्षमः ॥ १२ ॥
सर्वाश्रयान्निजे देहे देही विन्दति वेदनाम् ।
योगयुक्तस्तु सर्व्वेषां योगान्नाप्नोतिवेदनाम् ॥ १३ ॥

आकाशमेकं हि यथा घटादिषु पृथग् भवेत् । तथात्मैको ह्यनेकेषु जलाधारेष्विवांशुमान्
ब्रह्मखानिलतेजांसि जलभूक्षितिधातवः । इमे लोका एष चात्मा तस्माच्च सचराचरम्

मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम् ।
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥ १६ ॥

करणान्येवमादाय तासु तास्विह योनिषु । सृजत्यात्मानमात्मैवं सम्भूय करणानि च

कर्मणा दोषमोहाभ्यामिच्छयैव स बध्यते ।
ज्ञानाद् विमुच्यते जीवो धर्म्माद् योगी न रोगभाक् ॥ १८ ॥
वर्त्याधारस्नेहयोगाद् यथा दीपस्य संस्थितिः ।
विक्रियापि च दृष्ट्वैवमकाले प्राणसंक्षयः ॥ १९ ॥
अनंता रश्मयस्तस्य दीपवद् यः स्थितो हृदि ।
सितासिताः कद्रुनीलाः कपिलाः पीतलोहिताः ॥ २० ॥
ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्य्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ २१ ॥

यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् । तेन देवनिकायानि धामानि प्रतिपद्यते ॥
ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः । इह कर्मोपभोगाय तैश्च सञ्चरते हि सः

बुद्धीन्द्रियाणि सर्वाणि मनः कर्मेन्द्रियाणि च ।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥ २४ ॥

अव्यक्त आत्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते । ईश्वरः सर्वभूतस्थः सन्नसन् सदसच्च सः
बुद्धेरुत्पत्तिरव्यक्ता ततोऽहङ्कारसम्भवः । तस्मात् खादीनि जायन्तेएकोत्तरगुणानितु

शब्दः स्पर्शश्च रूपश्च रसो गन्धश्च तद्गुणाः ।
यो यस्मिन्नाश्रयश्चैषां स तस्मिन्नेव लीयते ॥ २७ ॥
सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्त्तिताः ।
रजस्तमोभ्यामाविष्टश्चक्रवद् भ्राम्यते हि सः ॥ २८ ॥

अनादिरादिमान् यश्च स एव पुरुषः परः । लिङ्गेन्द्रियैरुपग्राह्यः स विकार उदाहृतः ॥

यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद् वाङ्मयं भवेत् ॥ ३० ॥
पितृयानोपवीथ्याश्च यदगस्त्यस्य चान्तरम् ।
तेनाग्निहोत्रिणो यान्ति प्रजाकामा दिवं प्रति ॥ ३१ ॥

ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः । अष्टाशीतिसहस्राणि मुनयो गृहमेधिनः ॥
पुनरावर्त्तने बीजभूता धर्मप्रवर्त्तकाः । सप्तर्षिनागवीथ्याश्च देवलोकं समाश्रिताः ॥
तावन्त एव मुनयः सर्वारम्भविवर्जिताः । तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया ॥३४॥
यत्र यत्रावतिष्ठन्ते यावदाहूतसंप्लवम् । वेदानुवचनं यज्ञा ब्रह्मचर्यं तपो दमः ॥ ३५ ॥
श्रद्धोपवासः सत्यत्वमात्मनो ज्ञानहेतवः । स त्वाश्रमैर्निदिध्यास्यः समस्तैरेवमेव तु

द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ।
य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः ॥ ३७ ॥
उपासते द्विजाः सत्यं श्रद्धया परया युताः ।
क्रमात् ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम् ॥ ३८ ॥
अयनं देवलोकञ्च सवितारं सविद्युतम् ।
ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ॥ ३९ ॥

करोति पुनरावृत्तिस्तेषामिह न विद्यते । यज्ञेन तपसा दानैर्ये हि स्वर्गजितो जनाः ॥
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च । पितृलोकं चन्द्रमसं नभो वायुं जलं महीम्

क्रमात् ते सम्भवन्तीह पुनरेव व्रजन्ति च । एतद् यो न विजानाति मार्गद्वितयमात्मनः

दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः ।

हृदये दीपवद् ब्रह्म ध्यानाज्जीवो मृतो भवेत् ॥ ४३ ॥

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।

श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ ४४ ॥

इत्यादिमहापुराणे आग्नेये समाधिकथनं नामषट्सप्तत्यधिकत्रिशततमोऽध्यायः ।

---

# सप्तसप्तत्यधिकत्रिशततमोऽध्यायः

## ब्रह्मज्ञानम् ।

अग्निरुवाच ।

ब्रह्मज्ञानं प्रवक्ष्यामि संसाराज्ञानमुक्तये । अयमात्मा परं ब्रह्म अहमस्मीति मुच्यते ॥

देह आत्मा न भवति दृश्यत्वाच्च घटादिवत् ।

प्रसुप्ते मरणे देहादात्माऽन्यो ज्ञायते ध्रुवम् ॥ २ ॥

देहः स चेत् व्यवहरेदविकार्य्यादिसन्निभः ।

चक्षुरादीनीन्द्रियाणि नात्मा वै कारणं त्वतः ॥ ३ ॥

मनो धीरपि आत्मा न दीपवत् करणं त्वतः ।

प्राणोऽप्यात्मा न भवति सुषुप्ते चित्प्रभावतः ॥ ४ ॥

जाग्रत्स्वप्ने च चैतन्यं सङ्कीर्णत्वान्न बुध्यते । विज्ञानरहितः प्राणः सुषुप्ते ज्ञायते यतः

अतो नात्मेन्द्रियं तस्मादिन्द्रियादिकमात्मनः ।

अहङ्कारोऽपि नैवात्मा देहवद् व्यभिचारतः ॥ ६ ॥

उक्तेभ्यो व्यतिरिक्तोऽयमात्मा सर्वहृदि स्थितः ।

सर्वद्रष्टा च भोक्ता च नक्तमुज्ज्वलदीपवत् ॥ ७ ॥

समाध्यारम्भकाले च एवं सञ्चिन्तयेन् मुनिः ।
यतो ब्रह्मण आकाशं खाद् वायुर्वायुतोऽनलः ॥ ८ ॥
अग्नेरापो जलात् पृथ्वी ततः सूक्ष्मं शरीरकम् ।
अपञ्चीकृतभूतेभ्य आसन् पञ्चीकृतान्यतः ॥ ९ ॥
स्थूलं शरीरं ध्यात्वाऽस्माल्लयं ब्रह्मणि चिन्तयेत् ।
पञ्चीकृतानि भूतानि तत्कार्य्यञ्च विराट् स्मृतम् ॥ १० ॥
एतत् स्थूलं शरीरं हि आत्मनो ज्ञानकल्पितम् ।
इन्द्रियैरथ विज्ञानं धीरा जागरितं विदुः ॥ ११ ॥

विश्वस्तदभिमानी स्यात् त्रयमेतदकारकम् । अपञ्चीकृतभूतानि तत्कार्यं लिङ्गमुच्यते
संयुक्तं सप्तदशभिर्हिरण्यगर्भसंगितम् । शरीरमात्मनः सूक्ष्मं लिङ्गमित्यभिधीयते ॥

जाग्रत्संस्कारजः स्वप्नः प्रत्ययो विषयात्मकः ।
आत्मा तदुपमानी स्यात् तैजसो ह्यप्रपञ्चतः ॥ १४ ॥

स्थूलसूक्ष्मशरीराख्यद्वयस्यैकं हि कारणम् । आत्मा ज्ञानञ्च साभासं तदध्याहृतमुच्यते
न सन्नासन्न सदसदेतत् सावयवं न तत् । निर्गतावयवं नेति नाभिन्नं भिन्नमेव च ॥

भिन्नाभिन्नं ह्यनिर्वाच्यं बन्धसंसारकारकम् ।
एकं स ब्रह्म विज्ञानात् प्राप्तं नैव च कर्म्मभिः ॥ १७ ॥
सर्वात्मना हीन्द्रियाणां संहारः कारणात्मनाम् ।
बुद्धेः स्थानं सुषुप्तं स्यात् तद्द्वयस्याभिमानवान् ॥ १८ ॥
प्राज्ञ आत्मा त्रयञ्चैतत् मकारः प्रणवः स्मृतः ।
अकारश्च उकारोऽसौ मकारो ह्ययमेव च ॥ १९ ॥
अहं साक्षी च चिन्मात्रो जाग्रत्स्वप्नादिकस्य च ।
नाज्ञानञ्चैव तत्कार्यं संसारादिकबन्धनम् ॥ २० ॥

नित्यशुद्धबन्धमुक्तसत्यमानन्दमद्वयम् । ब्रह्माहमस्म्यहं ब्रह्म परं ज्योतिर्विमुक्त ओम् ॥
अहं ब्रह्म परं ज्ञानं समाधिर्बन्धघातकः । चिरमानन्दकं ब्रह्म सत्यं ज्ञानमनन्तकम् ॥

अयमात्मा परं ब्रह्म तद् ब्रह्म त्वममीति च ।
गुरुणा बोधितो जीवो ह्यहं ब्रह्माऽस्मि बाह्यतः ॥ २३ ॥
सोऽसावादित्यपुरुषः सोऽसावहमखण्ड ओम् ।
मुच्यतेऽसारसंसाराद् ब्रह्मज्ञो ब्रह्म तद् भवेत् ॥ २४ ॥
इत्यादि महापुराणे आग्नेये ब्रह्मज्ञानकथनं नाम सप्तसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

## अष्टसप्तत्यधिकत्रिशततमोऽध्यायः

### ब्रह्मज्ञानम् ।

अग्निरुवाच ।

अहं ब्रह्म परं ज्योतिः पृथिव्यनलोज्झितम् ।
अहं ब्रह्म परं ज्योतिर्वाय्वाकाशविवर्जितम् ॥ १ ॥
अहं ब्रह्म परं ज्योतिरादिकार्यविवर्जितम् । अहं ब्रह्म परं ज्योतिर्विराडात्मविवर्जितम्
अहं ब्रह्म परं ज्योतिर्जाग्रत्स्थानविवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्विश्वभावविवर्जितम् ॥ ३ ॥
अहं ब्रह्म परं ज्योतिराकाराक्षरवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्वाक्पाण्यङ्घ्रिविवर्जितम् ॥ ४ ॥
अहं ब्रह्म परं ज्योतिः पायूपस्थविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः श्रोत्रत्वक्चक्षुरुज्झितम् ॥ ५ ॥
अहं ब्रह्म परं ज्योतीरसरूपविवर्जितम् । अहं ब्रह्म परं ज्योतिः सर्वगन्धविवर्जितम् ॥
अहं ब्रह्म परं ज्योतिर्जिह्वाघ्राणविवर्जितम् । अहं ब्रह्म परं ज्योतिः स्पर्शशब्दविवर्जितम्
अहं ब्रह्म परं ज्योतिर्मनोबुद्धिविवर्जितम् । अहं ब्रह्म परं ज्योतिश्चित्ताहङ्कारवर्जितम् ॥
अहं ब्रह्म परं ज्योतिः प्राणापानविवर्जितम् । अहं ब्रह्म परं ज्योतिर्व्यानोदानविवर्जितम्

अहं ब्रह्म परं ज्योतिः समानपरिवर्जितम् । अहं ब्रह्म परं ज्योतिर्जरामरणवर्जितम् ॥
अहं ब्रह्म परं ज्योतिः शोकमोहविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः क्षुत्पिपासाविवर्जितम् ॥ ११ ॥
अहं ब्रह्म परं ज्योतिः शब्दोद्भूतादिवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्हिरण्यगर्भवर्जितम् ॥ १२ ॥
अहं ब्रह्म परं ज्योतिः स्वप्नावस्थाविवर्जितम् ।
अहं ब्रह्म परं ज्योतिस्तैजसादिविवर्जितम् ॥ १३ ॥
अहं ब्रह्म परं ज्योतिरपकारादिवर्जितम् । अहं ब्रह्म परं ज्योतिः सभाज्ञानविवर्जितम् ॥
अहं ब्रह्म परं ज्योतिरध्याहृतविवर्जितम् । अहं ब्रह्म परं ज्योतिः सत्त्वादिगुणवर्जितम्
अहं ब्रह्म परं ज्योतिः सदसद्भाववर्जितम् । अहं ब्रह्म परं ज्योतिः सर्वावयववर्जितम्
अहं ब्रह्म परं ज्योतिर्भेदाभेदविवर्जितम् । अहं ब्रह्म परं ज्योतिः सुषुप्तिस्थानवर्जितम् ॥
अहं ब्रह्म परं ज्योतिः प्राज्ञभावविवर्जितम् । अहं ब्रह्म परं ज्योतिर्मकारादिविवर्जितम्
अहं ब्रह्म परं ज्योतिर्मानमेयविवर्जितम् । अहं ब्रह्म परं ज्योतिर्मितिमातृविवर्जितम् ॥
अहं ब्रह्म परं ज्योतिः साक्षित्वादिविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः कार्य्यकारणवर्जितम् ॥ २० ॥
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् । जाग्रत्स्वप्नसुषुप्त्याविमुक्तं ब्रह्म तुरीयकम् ॥
नित्यशुद्धबुद्धमुक्तं सत्यमानन्दमद्वयम् । ब्रह्माऽहमस्म्यहं ब्रह्म सविज्ञानं विमुक्त ओम्
अहं ब्रह्म परं ज्योतिः समाधिर्मोक्षदः परः ॥ २२ ॥
इत्यादिमहापुराणेआग्नेयेब्रह्मज्ञानकथनंनामअष्टसप्तत्यधिकत्रिशततमोऽध्यायः ॥

———

# ऊनाशीत्यधिकत्रिशततमोऽध्यायः

## ब्रह्मज्ञानम् ।

अग्निरुवाच ।

यज्ञेश्च देवानाप्नोति वैराजं तपसा पदम् । ब्रह्मणः कर्मसन्यासाद् वैराग्यात् प्रकृतौलयम्

ज्ञानात् प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ।

प्रीतितापविषादादेर्विनिवृत्तिर्विरक्तता ॥ २ ॥

सन्न्यासः कर्मणां त्यागः कृतानामकृतैः सह ।

अव्यक्तादौ विशेषान्ते विकारोऽस्मिन् निवर्त्तते ॥ ३ ॥

चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते । परमात्मा च सर्वेषामाधारः परमेश्वरः ॥ ४ ॥

विष्णुनाम्ना च देवेषु वेदान्तेषु च गीयते । यज्ञेश्वरो यज्ञपुमान् प्रवृत्तैरिज्यते ह्यसौ ॥

निवृत्तैर्ज्ञानयोगेन ज्ञानमूर्त्तिः स चेक्ष्यते । ह्रस्वदीर्घप्लुताद्यन्तु वचस्तत्पुरुषोत्तम ॥६॥

तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने ! । आगमोक्तं विवेकाच्च द्विधा ज्ञानं तथोच्यते

शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् । द्वे ब्रह्मणी वेदितव्ये ब्रह्मशब्दपरञ्च यत् ॥ ८ ॥

वेदादिविद्या ह्यपरमक्षरं ब्रह्मसत्परम् । तदेतद्भगवद्वाच्यमुपचारेऽर्चनेऽन्यतः ॥ ६ ॥

सम्भर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः ।

नेता गमयिता स्रष्टा गकारोऽयं महामुने ! ॥ १० ॥

ऐश्वर्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना

वसन्ति विष्णौ भूतानि स च धातुस्त्रिधात्मकः ।

एवं हरौ हि भगवान् शब्दोऽन्यत्रापचारित ॥ १२ ॥

उत्पत्ति प्रलयञ्चैव भूतानामगति गतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति

ज्ञानशक्तिः परैश्वर्यं वीर्य्यं तेजांस्यशेषतः ।

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ १४ ॥

खाण्डिक्यजनकायाह योगं केशिध्वजः पुरा ।
अनात्मन्यात्मबुद्धिर्या आत्मस्वमिति या मतिः ॥ १५ ॥
अविद्याभवसम्भूतिर्बीजमेतद् द्विधा स्थितम् । पञ्चभूतात्मके देहे देही मोहतमाश्रितः
अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिम् । इत्थञ्च पुत्रपौत्रेषु तद्देहोत्पादितेषु च ॥
करोति पण्डितः साम्यमनात्मनि कलेवरे । सर्वदेहोपकाराय कुरुते कर्म मानवः ॥
देहश्चान्यो यदा पुंसस्तदा बन्धाय तत्परम् । निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः
दुःखज्ञानमयोऽधर्मः प्रकृतेः स तु नात्मनः ।
जलस्य नाग्निना सङ्गः स्थालीसङ्गात् तथापि हि ॥ २० ॥
शब्दास्ते कादिका धर्मास्तत् कृता वै महामुने ।
तथात्मा प्रकृतौ सङ्गादहंमानादिभूषितः ॥ २१ ॥
भजते प्राकृतान् धर्मान् अन्यस्तेभ्यो हि सोऽव्ययः ।
बन्धाय विषयासङ्गं मनो निर्विषयं धिये ॥ २२ ॥
विषयात् तत् समाकृष्य ब्रह्मभूतं हरिं स्मरेत् । आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनंमुने
विचार्य स्वात्मनः शक्त्या लौहमाकर्षको यथा ।
आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ॥ २४ ॥
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ।
विनिष्पन्दः समाधिस्थः परं ब्रह्माधिगच्छति ॥ २५ ॥
यमैः सनियमैः स्थित्या प्रत्याहृत्या मरुज्जयैः ।
प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतैस्ततः कुर्य्यात् स्थितं चेतः शुभाश्रये ।
आश्रयश्चेतसो ब्रह्म मूर्त्तञ्चामूर्त्तकं द्विधा ॥ २७ ॥
सनन्दनादयो ब्रह्मभावभावनया युताः । कर्मभावनया चान्ये देवाद्याः स्थावरान्तकाः
हिरण्यगर्भादिषु च ज्ञानकर्मात्मिका द्विधा ।
त्रिविधा भावना प्रोक्ता विश्वं ब्रह्म उपास्यते ॥ २६ ॥

प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
तच्च विष्णोः परं रूपमरूपस्याजमक्षरम् । अशक्यं प्रथमं ध्यातुमतोमूर्त्तादिचिन्तयेत्
मद्भावभावमापन्नस्ततोऽसौ परमात्मना । भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेत्
इत्यादिमहापुराणेआग्नेये ब्रह्मज्ञानकथनं नामोनाशीत्यधिकत्रिशततमोऽध्यायः ।

---

# अशीत्यधिकत्रिशततमोऽध्यायः

## अद्वैतब्रह्मविज्ञानम्

अग्निरुवाच ।

अद्वैतब्रह्मविज्ञानं वक्ष्ये यद्भरतोऽगदत् । शालग्रामे तपश्चक्रे वासुदेवार्चनादिकृत् ॥१॥
मृगसङ्गान्मृगो भूत्वा ह्यन्तकाले स्मरन् मृगम् ।
जातिस्मरो मृगस्त्यक्त्वा देहं योगात् स्वतोऽभवत् ॥ २ ॥
अद्वैतब्रह्मभूतश्च जडवल्लोकमाचरत् । क्षत्ताऽसौ वीरराजस्य विष्टियोगममन्यत ॥ ३ ॥
उवाह शिविकामस्य क्षत्तुर्वचनचोदितः । गृहीतो विष्टिना ज्ञानी उवाहात्मक्षयाय तम्
ययौ जड़गतिः पश्चात् ये त्वन्ये त्वरितं ययुः ।
शीघ्रान् शीघ्रगतीन् दृष्ट्वा अशीघ्रं तं नृपोऽब्रवीत् ॥ ५ ॥

राजोवाच ।

किं श्रान्तोऽस्यल्पमध्वानं त्वयोढ़ा शिविका मम ।
किमायाससहो न त्वं पीवानसि निरीक्ष्यसे ॥ ६ ॥

ब्राह्मण उवाच ।

नाहं पीवान् न वैवोढ़ा शिविका भवतो मया ।
न श्रान्तोऽस्मि न वायासो वोढ़व्योऽसि महीपते ! ॥ ७ ॥
भूमौ पादयुगं तस्थौ जङ्घे पादद्वये स्थिते । ऊरू जङ्घाद्वयावस्थौ तदाधारं तथोदरम्

वक्षःस्थले तथा बाहूस्कन्धौ चोदरसंस्थितौ ।
स्कन्धस्थितेयं शिविका मम भावोऽत्र किं कृतः ॥ ६ ॥

शिविकायां स्थितश्चेदं देहं त्वदुपलक्षितम् । तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥
अहं त्वञ्च तथाऽन्ये च भूतैरुह्याम पार्थिव ! । गुणप्रवाहपतितो गुणवर्गो हि यात्ययम्
कर्मवश्या गुणाश्चैते सत्वाद्याः पृथिवीपते ? । अविद्यासञ्चितं कर्म तच्चाशेषेषु जन्तुषु

आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्धयपचयौ नास्य एकस्याखिलजन्तुषु ॥ १३ ॥
यदा नोपचयस्तस्य यदा नापचयो नृप ! ।
तदा पीवानसीति त्वं कया युक्त्या त्वयेरितम् ॥ १४ ॥

भूजङ्घापादकट्यूरुजठरादिषु संस्थिता । शिविकेयं तथा स्कन्धे तदाभावः समस्त्वया
तदन्यजन्तुभिर्भूप ! शिविकोत्थानकर्मणा । शैलद्रव्यगृहोतोत्थः पृथिवीसम्भवोऽपिवा
यथा पुंसः पृथग्भावः प्राकृतैः करणैर्नृप ! । सोढव्यः स महाभारः कतरो नृपते मया
यद्द्रव्या शिविका चेयं तद्द्रव्यो भूतसंग्रहः । भवतो मेऽखिलस्यास्यसमत्वेनोपबृंहितः

तच्छ्रुत्वोवाच राजा त्वं गृहीत्वाङ्घ्री क्षमाप्य च ।
प्रसादं कुरु त्यक्त्वेमां शिविकां ब्रूहि शृण्वते।
यो भवान् यन्निमित्तं वा यदागमनकारणम् ॥ १६ ॥

ब्राह्मण उवाच ।

श्रूयतां कोऽहमित्येतद् वक्तुं नैव च शक्यते । उपभोगनिमित्तञ्च सर्वत्रागमनक्रिया
सुखदुःखोपभोगौ तु तौ देशाद्युपपादकौ । धर्माधर्मोद्भवौ भोक्तुं जन्तुर्देशादिमृच्छति

राजोवाच ।

योऽस्ति सोहमिति ब्रह्मन् ! कथं वक्तुं न शक्यते ।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ! ॥ २२ ॥

ब्राह्मण उवाच ।

शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत् ।

अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ २३ ॥

यदा समस्तदेहेषु पुमानेको व्यवस्थितः । तदाहि को भवान्कोऽहमित्येतद्विफलंवचः

त्वं राजा शिविका चेयं वयं वाहाः पुरःसराः । अयञ्च भवतो लोकोनसदेतन्नृपोच्यते

वृक्षाद् दारु ततश्चेयं शिविका त्वदधिष्ठिता ।

कावृक्षसंज्ञा जातास्य दारुसंज्ञाऽथ वा नृप ॥ २६ ॥

वृक्षारूढ़ो महाराजो नायं वदति चेतनः । न च दारुणि सर्वस्त्वां ब्रवीतिशिविकागतम्

शिविकादारुसङ्घातो रचनास्थितिसंस्थितः ।

अन्विष्यतां नृपश्रेष्ठ ! तद्भेदे शिविका त्वया ॥ २८ ॥

पुमान् स्त्री गौरयं वाजी कुञ्जरोविहगस्तरुः । देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥

जिह्वा ब्रवीत्यहमिति दन्तौष्ठौ तालुकं नृप ! । एते नाहं यतः सर्व्वे वाङ्‌निष्पादनहेतवः

किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम् । तथापि वाङ् नाहमेतदुक्तं मिथ्या न युज्यते

पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः ।

ततोऽहमिति कुत्रैतां संज्ञां राजन् ! करोम्यहम् ॥ ३२ ॥

यदन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ! । तदेषोऽहमयंचान्योवक्तुमेवमपीष्यते

परमार्थभेदो न नगो न पशुर्न च पादपः । शरीराश्च विभेदाश्च य एते कर्मयोनयः ॥३४॥

यस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।

तच्चान्यच्च नृपेत्थन्तु न सत् सम्यगनामयम् ॥ ३५ ॥

त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपोरिपुः ।

पत्न्याः पतिः पितासूनोः कस्त्वां भूप ! वदाम्यहम् ॥ ३६ ॥

त्वं किमेतच्छिरः किन्तु शिरस्तव तथोदरम् ।

किमु पादादिकं त्व वै तवैतत् किं महीपते ! ॥ ३७ ॥

समस्तावयवेभ्यस्त्वं पृथग्भूतो व्यवस्थितः ।

कोऽहमित्यत्र निपुणं भूत्वा चिन्तय पार्थिव ! ।

तच्छ्रुत्वोवाच राजा तमवधूतं द्विजं हरिम् ॥ ३८ ॥

राजोवाच ।

श्रेयोऽर्थमुद्यतः प्रष्टुं कपिलर्षिमहं द्विज ! ।

तस्यांशः कपिलर्षेस्त्वं मत् कृते ज्ञानदो भुवि । ज्ञानवीच्युदधेर्यस्माद् यच्छ्रेयस्तच्च मे वद

ब्राह्मण उवाच ।

भूयः पृच्छसि किं श्रेयः परमार्थं न पृच्छसि । श्रेयांस्यपरमार्थानि अशेषाण्येव भूपते !

देवताराधनं कृत्वा धनसम्पत्तिमिच्छति । पुत्रानिच्छति राज्यञ्च श्रेयस्तस्यैव किं नृप !

विवेकिनस्तु संयोगः श्रेयो यः परमात्मनः ।

यज्ञादिका क्रिया न स्यात् नास्ति द्रव्योपपत्तिता ॥ ४२ ॥

परमार्थात्मनोर्योगः परमार्थ इतीष्यते । एको व्यापि समः शुद्धो निर्गुणः प्रकृतेः परः

जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ।

परं ज्ञानमयोऽसङ्गी गुणजात्यादिभिर्विभुः ॥ ४४ ॥

निदाघऋतुसंवादं वदामि द्विज ! तं शृणु ।

ऋतुर्ब्रह्मसुतो ज्ञानी तच्छिष्योऽभूत् पुलस्त्यजः ॥ ४५ ॥

निदाघः प्राप्तविद्योऽस्मान्नगरे वै पुरे स्थितः । देविकायास्तटे तञ्च तर्कयामास वैऋतुः

दिव्ये वर्षसहस्रेऽगान्निदाघमवलोकितुम् । निदाघो वैश्वदेवान्ते भुक्तवान्नं शिष्यमब्रवीत्

भुक्त्यन्ते तृप्तिरुत्पन्ना तुष्टिदा साऽक्षया यतः ॥ ४७ ॥

ऋतुरुवाच ।

क्षुदस्ति यस्य भुक्तेऽन्ने तुष्टिर्ब्राह्मण ! जायते ।

न मे क्षुदभवत् तृप्तिं कस्मात् त्वं परिपृच्छसि ॥ ४८ ॥

क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज ! ।

पृष्टोऽहं तत् त्वया ब्रूयां तृप्तिरस्त्येव मे सदा ॥ ४९ ॥

पुमान् सर्वगतो व्यापी आकाशवदयं यतः ।

अतोऽहं प्रत्यगात्माऽस्मीत्येतदर्थे भवेत् कथम् ॥ ५० ॥

सोऽहं गन्ता न चागन्ता नैकदेशनिकेतनः ।

त्वं चान्यो न भवेन्नापि नान्यस्त्वत्तोऽस्मि वाप्यहम् ॥ ५१ ॥
मृण्मयं हि गृहं यद्वन्मृदालिप्तं स्थिरीभवेत् ।
पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ॥ ५२ ॥
ऋतुरस्मि तवाचार्य्यः प्रज्ञादानाय ते द्विज ! । इहागतोऽहं यास्यामि परमार्थस्तवोदितः
एकमेवमिदं विद्धि न भेदः सकलं जगत् । वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥
ऋतुर्वर्षसहस्रान्ते पुनस्तन्नगरं ययौ । निदाघं नगरप्रान्ते एकान्ते स्थितमब्रवीत् ॥
एकान्ते स्थीयते कस्मान्निदाघं ऋतुरब्रवीत् ॥ ५५ ॥

निदाघ उवाच ।

भो विप्र ! जनसंवादो महानेष नरेश्वरः । प्रविवीक्ष्य पुरं रम्यं तेनात्र स्थीयते मया ॥

ऋतुरुवाच ।

नराधिपोऽत्र कतमः कतमश्चेतरो जनः । कथ्यतां मे द्विजश्रेष्ठ ! त्वमभिज्ञो द्विजोत्तम !
योऽयं गजेन्द्रमुन्मत्तमद्रिशृङ्गसमुत्थितम् । अधिरूढो नरेन्द्रोऽयं परिवारस्तथेतरः ॥
गजो योऽयमधो ब्रह्मन्नुपर्य्येव स भूपतिः । ऋतुराह गजः कोऽत्र राजा चाह निदाघकः
ऋतुर्निदाघ आरूढो दृष्टान्तं पश्यवाहनम् । उपर्य्यहं यथा राजा त्वमधः कुञ्जरो यथा
ऋतुः प्राह निदाघं तं कतमस्त्वामहं वदे ।
उक्तो निदाघस्तन्नत्वा प्राह मे त्वं गुरुर्ध्रुवम् ॥ ६१ ॥
नान्यस्माद् द्वैतसंस्कारसंस्कृतं मानसं तथा ।
ऋतुः प्राह निदाघं तं ब्रह्मज्ञानाय चागतः । परमार्थं सारभूतमद्वैतं दर्शितं मया ॥६२॥

ब्राह्मण उवाच ।

निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् । सर्वभूतान्यभेदेन ददृशे स तदात्मनि ॥ ६३ ॥
अवाप मुक्तिं ज्ञानात् स तथा त्वं मुक्तिमाप्स्यसि ।
एकः समस्तं त्वञ्चाहं विष्णुः सर्वगतो यतः ॥ ६४ ॥
पीतनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तिदृष्टिभिरात्मापि तथैकः स पृथक् पृथक्

अग्निरुवाच ।

मुक्तिं ह्यवाप भवतो ज्ञानसारेण भूपतिः । संसाराज्ञानवृक्षारिज्ञानं ब्रह्मेति चिन्तये ॥
इत्यादिमहापुराणेआग्नेये अद्वैतब्रह्मविज्ञानकथनंनामाशीत्यधिकत्रिशततमोऽध्यायः ।

---

# एकाशीत्यधिकत्रिशततमोऽध्यायः

## गीतासारः ।

अग्निरुवाच ।

गीतासारं प्रवक्ष्यामि सर्वगीतोत्तमोत्तमम् ।
कृष्णोऽर्जुनाय यमाह पुरा वै भुक्तिमुक्तिदम् ॥ १ ॥

श्रीभगवानुवाच ।

गतासुरगतासुर्वा न शोच्यो देहवानजः ।
आत्माऽजरोऽमरोऽभेद्यस्तस्माच्छोकादिकं त्यजेत् ॥ २ ॥
ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् कामस्ततः क्रोधः क्रोधात् सम्मोह एव च ॥ २ ॥
सम्मोहात् स्मृतिविभ्रंशो बुद्धिनाशात् प्रणश्यति ।
दुःसङ्गहानिः सत्सङ्गान्मोक्षकामी च कामनुत् ॥ ४ ॥
कामत्यागादात्मनिष्ठः स्थिरप्रज्ञस्तदोच्यते ।
या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी ॥ ५ ॥
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥ ६ ॥
नैव तस्य कृते नार्थो नाकृते नेह कश्चनः । तत्त्ववित् तु महाबाहो गुणकर्मविभागयोः
गुणा गुणेषु वर्त्तन्ते इति मत्वा न सज्जते । सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यति ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ! ।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ॥ ६ ॥

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा। सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः। शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥

न हि कल्याणकृत् कश्चिद् दुर्गतिं तात! गच्छति।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ १२ ॥

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ! ॥
चतुर्विधा भजन्ते मां ज्ञानी चैकत्वमास्थितः। अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः। अधिभूतं क्षरोभावः पुरुषश्चाधिदैवतम् ॥१५॥
अधियज्ञोऽहमेवात्र देहे देहभृतां वर! । अन्तकाले स्मरन् माञ्च मद्भावं यात्यसंशयः ॥

यं यं भावं स्मरन्नन्ते त्यजेद् देहं तमाप्नुयात्।
प्राणं न्यस्य भ्रुवोर्मध्ये अन्ते प्राप्नोति मत्परम् ॥ १७ ॥

ओमित्येकाक्षरं ब्रह्म वदन् देहं त्यजन् तथा। ब्रह्मादिस्तम्भपर्य्यन्ताः सर्वे मम विभूतयः

श्रीमन्तश्चोर्जिताः सर्वे ममांशाः प्राणिनः स्मृताः।
अहमेको विश्वरूप इति ज्ञात्वा विमुच्यते ॥ १९ ॥
क्षेत्रं शरीरं यो वेत्ति क्षेत्रज्ञः स प्रकीर्त्तितः।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज् ज्ञानं मतं मम ॥ २० ॥

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतम्

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥ २३ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च। जन्म मृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥२४॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥२५॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥२६॥
अध्यात्मज्ञाननिष्ठत्वं तत्त्वज्ञानानुदर्शनम्। एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥

ज्ञेयं यत् तत् प्रवक्ष्यामि यं ज्ञात्वाऽमृतमश्नुते ।
अनादि परमं ब्रह्म सत्त्वं नाम तदुच्यते ॥ २८ ॥

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
बहिरन्तश्च भूतानामचरञ्चरमेव च । सूक्ष्मत्वात् तदविज्ञेयं दूरस्थञ्चान्तिकेऽपि यत्
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् । भूतभर्तृ च विज्ञेयं ग्रसिष्णु प्रभविष्णु च

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य संस्थितम् ॥ ३३ ॥
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ ३४ ॥
अन्ये त्वेवमजानन्तो श्रुत्वाऽन्येभ्यः उपासते ।
तेऽपि चाशु तरन्त्येव मृत्युं श्रुतिपरायणाः ॥ ३५ ॥

सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतो ज्ञानमेव च
गुणा वर्त्तन्त इत्येव योऽवतिष्ठति नेङ्गते । मानावमानमित्रारितुल्यस्त्यागी स निर्गुणः
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
अहिंसादिः क्षमा चैव दैवीसम्पत्तितो नृणाम् ॥ ३६ ॥
न शौचं नापि चाचारो ह्यासुरीसम्पदोद्भवः ।
नरकत्वात् क्रोधलोभकामस्तस्मात् त्रयं त्यजेत् ॥ ४० ॥
यज्ञस्तपस्तथा दानं सत्त्वाद्यैस्त्रिविधं स्मृतम् ।
आयुः सत्त्वं बलारोग्य सुखायान्नन्तुसात्त्विकम् ॥ ४१ ॥
दुःखशोकामयायान्नं तीक्ष्णरूक्षन्तु राजसम् ।
अमेध्योच्छिष्टपूत्यन्नं तामसं नीरसादिकम् ॥ ४२ ।
यष्टव्यो विधिना यज्ञो निष्कामाय स सात्त्विकः ।

यज्ञः फलाय दम्भात्मा राजसस्तामसः क्रतुः ॥ ४३ ॥
श्रद्धामन्त्रादिविध्युक्तं तपः शारीरमुच्यते ।
देवादिपूजाऽहिंसादि वाङ्मयं तप उच्यते ॥ ४४ ॥
अनुद्वेगकरं वाक्यं सत्यं स्वाध्यायसज्जपः । मानसं चित्तसंशुद्धेर्मौनमात्मविनिग्रहः
सात्त्विकञ्च तपोऽकामं फलाद्यर्थन्तु राजसम् । तामसं परपीडायै सात्त्विकं दानमुच्यते
देशादौ चैव दातव्यमुपकाराय राजसम् । अदेशादावपज्ञातं तामसं दानमीरितम्॥४७॥
ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
यज्ञदानादिकं कर्म भुक्तिमुक्तिप्रदं नृणाम् ॥ ४८ ॥
अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ ४९ ॥
तामसः कर्मसंयोगात् मोहात् क्लेशभयादिकात् ।
राजसः सात्त्विकोऽकामात् पञ्चैते कर्महेतवः ॥ ५० ॥
अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम् । त्रिविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्
एकं ज्ञानं सात्त्विकं स्यात् पृथग् ज्ञानन्तु राजसम् ।
अतत्वार्थं तामसं स्यात् कर्माकामाय सात्त्विकम् ॥ ५२ ॥
कामाय राजसं कर्म मोहात् कर्म तु तामसम् ।
सिद्ध्यसिद्ध्योः समः कर्त्ता सात्त्विको राजसोऽत्यपि ॥ ५३ ॥
शठोऽलसस्तामसः स्यात् कार्य्यादिधीश्च सात्त्विकी ।
कार्य्यार्थं सा राजसी स्याद् विपरीता तु तामसी ॥ ५४ ॥
मनोधृतिः सात्त्विकी स्यात् प्रीतिकामेति राजसी ।
तामसी तु प्रशोकादौ सुखं सत्त्वात्तदन्तगम् ॥ ५५ ॥
सुखं तद्राजसञ्चाग्रे अन्ते दुःखन्तु तामसम् । अतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्
स्वकर्मणा तमभ्यर्च्य विष्णुं सिद्धिञ्च विन्दति ।
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥ ५७ ॥

ब्रह्मादिस्तम्भपर्य्यन्तं जगद् विष्णुञ्च वेत्ति यः।
सिद्धिमाप्नोति भगवद्भक्तो भागवतो ध्रुवम् ॥ ५८ ॥
इत्यादिमहापुराणेआग्नेयेगीतासारकथनंनामैकाशीत्यधिकत्रिशततमोऽध्यायः।

---

# द्व्यशीत्यधिकत्रिशततमोऽध्यायः

## यमगीता।

अग्निरुवाच।

यमगीतां प्रवक्ष्यामि उक्ता या नाचिकेतसे।
पठतां शृण्वतां भुक्त्यै मुक्त्यै मोक्षार्थिनां सताम् ॥ १ ॥

यम उवाच।

आसनं शयनं यानपरिधानगृहादिकम्। वाञ्छत्यहोऽतिमोहेन सुस्थिरं स्वयमस्थिरः
भोगेषु शक्तिः सततं तथैवात्मावलोकनम्। श्रेयः परं मनुष्याणां कपिलोद्गीतमेव हि
सर्वत्र समदर्शित्वं निर्ममत्वमसङ्गता। श्रेयः परं मनुष्याणां गीतं पञ्चशिखेन हि॥
आगर्भजन्मबाल्यादिवयोऽवस्थादिवेदनम्।
श्रेयः परं मनुष्याणां गङ्गाविष्णु प्रगीतकम् ॥ ५ ॥
आध्यात्मिकादिदुःखानामाद्यन्तादिप्रतिक्रिया।
श्रेयः परं मनुष्याणां जनकोद्गीतमेव च ॥ ६ ॥
अभिन्नयोर्भेदकरः प्रत्ययो यः परात्मनः। तच्छान्तिपरमं श्रेयो ब्रह्मोद्गीतमुदाहृतम् ॥
कर्त्तव्यमिति यत्कर्म ऋग्यजुः सामसंज्ञितम्। कुरुते श्रेयसे सङ्गान् जैगीषव्येण गीयते
हानिः सर्वविधित्सानामात्मनः सुखहेतुकी। श्रेयः परं मनुष्याणां देवलोद्गीतमीरितम्
कामत्यागात् तु विज्ञानं सुखं ब्रह्म परं पदम्।
कामिनां न हि विज्ञानं सनकोद्गीतमेव तत् ॥ १० ॥

प्रवृत्तश्च निवृत्तश्च कार्यं कर्मपरोऽब्रवीत् । श्रेयसां श्रेय एतद्धि नैष्कर्म्यं ब्रह्म तद्धरिः
पुमांश्चाधिगतज्ञानो भेदं नाप्नोति सत्तमः । ब्रह्मणा विष्णुसंज्ञेन परमेणाव्ययेन च

ज्ञानं विज्ञानमास्तिक्यं सौभाग्यं रूपमुत्तमम् ।
तपसा लभ्यते सर्वं मनसा यद् यदिच्छति ॥ १३ ॥
नास्ति विष्णुसमं ध्येयं तपो नाऽनशनात् परम् ।
नास्त्यारोग्यसमं धन्यं नास्ति गङ्गासमा सरित् ।
न सोऽस्ति बान्धवः कश्चिद् विष्णुं मुक्त्वा जगद्गुरुम् ।
अधश्चोर्ध्वं हरिश्चाग्रे देहेन्द्रियमनोमुखे ॥ १५ ॥
इत्येवं संस्मरन् प्राणान् यस्त्यजेत् स हरिर्भवेत् ।
यत् तद् ब्रह्म यतः सर्वं यत् सर्वं तस्य संस्थितम् ॥ १६ ॥

अग्राह्यकमनिर्देश्यं सुप्रतिष्ठञ्च यत् परम् । परापरस्वरूपेण विष्णुः सर्वहृदि स्थितः ॥

यज्ञेशं यज्ञपुरुषं केचिदिच्छन्ति तत् परम् ।
केचिद् विष्णुं हरं केचित् केचिद् ब्रह्माणमीश्वरम् ॥ १८ ॥
इन्द्रादिनामभिः केचित् सूर्यं सोमञ्च कालकम् ।
ब्रह्मादिस्तम्भपर्यन्तं जगद् विष्णुं वदन्ति च ॥ १९ ॥

स विष्णुः परमं ब्रह्म यतो नावर्त्तते पुनः । सुवर्णादिमहादानपुण्यतीर्थावगाहनैः ॥
ध्यानैर्व्रतैः पूजया च धर्मश्रुत्या तदाप्नुयात् । आत्मानं रथिनं विद्धि शरीरं रथमेव तु
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांश्चेषुगोचरान् ॥

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ॥ २३ ॥
न सत्पदमवाप्नोति संसारञ्चाधिगच्छति ।
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ॥ २४ ॥
स तत् पदमवाप्नोति यस्माद् भूयो न जायते ।
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ॥ २५ ॥

सोऽध्वानं परमाप्नोति तद् विष्णोः परमं पदम् ।
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥ २६ ॥
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः ॥
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।
एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥ २८ ॥
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मा सूक्ष्मदर्शिभिः ।
यच्छेद् वाङ्मनसी प्राज्ञः तद् यच्छेज् ज्ञानमात्मनि ॥ २९ ॥
ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि ।
ज्ञात्वा ब्रह्मात्मनोर्योगं यस्माद्यैर्ब्रह्म सद् भवेत् ॥ ३० ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ । यमाश्च नियमाः पञ्च शौचं सन्तोषसत्तपः ॥
स्वाध्यायेश्वरपूजा च आसनं पद्मकादिकम् ।
प्राणायामो वायुजयः प्रत्याहारः स्वनिग्रहः ॥ ३२ ॥
शुभे ह्येकत्र विषये चेतसो यत् प्रधारणम् ।
निश्चलत्वात् तु धीमद्भिर्धारणा द्विज कथ्यते ॥ ३३ ॥
पौनःपुन्येन तत्रैव विषयेष्वेव धारणा । ध्यानं स्मृतं समाधिस्तु अहं ब्रह्मात्मसंस्थितिः
घटध्वंसाद् यथाकाशमभिन्नं नभसा भवेत् ।
मुक्तो जीवो ब्रह्मणैवं सद् ब्रह्म ब्रह्म वै भवेत् ॥ ३५ ॥
आत्मानं मन्यते ब्रह्म जीवो ज्ञानेन नान्यथा ।
जीवो ह्यज्ञानतत्कार्य्यमुक्तः स्यादजरामरः ॥ ३६ ॥

अग्निरुवाच ।

वशिष्ठ ! यमगीतोक्ता पठतां भुक्तिमुक्तिदा ।
आत्यन्तिको लयः प्रोक्तो वेदान्तब्रह्मधीमयः ॥ ३७ ॥

इत्यादिमहापुराणे आग्नेये यमगीताकथनं नामद्व्यशीत्यधिकत्रिशततमोऽध्यायः ।

